# SAT-DARSHANA BHĀSHYA








KAPALI




RAMANA MAHARSHI

विशदहसिते पूर्णा शान्तिः सुधाकरसोदरे
स्थिरपृथुलयोः पूर्णा शक्तिः दृशोरतुलार्चिषोः ।
हृदयकमले नित्या निष्ठा वहिश्च सरत्प्रभे
रमणभगवन् को वा मौनी समस्तव भूतले ॥

श्रीभगवद्रमणमहर्षिविरचितद्राविडग्रन्थस्य संस्कृतानुवादात्मकम्

# सद्दर्शनम्

श्रीवासिष्ठगणपतिमुनिविरचितम्

भारद्वाजेन कपालिना विरचितेन भाष्येण संयुतम्

अरुणाचलक्षेत्रस्थ-रमणाश्रमकार्यनिर्वाहकेन श्रीनिरञ्जनानन्दस्वामिना
प्रकाशितम्

अड्यार् श्रीवसन्ता मुद्राक्षरशालायां श्रीसीतारामशास्त्रिभिर्मुद्रितम्



1931

## प्रस्तावना ॥

इदं सद्दर्शनमूलं श्रीभगवद्रमणमहर्षिकृतद्राविडग्रन्थस्य भाषान्तरीकरणात्मकं तत्र भवान् वासिष्ठगणपतिमुनिः कर्णाटकमण्डलान्तर्गतशिरिसिपुर्यां आनन्दाश्रमे तपश्चरन् रचितवान् । अस्य भाष्यं च तत्रैवाश्रमे गुरोरन्तिके तपश्चरन्, आर्यो भारद्वाजः कपाली समारभ्य पूरितवान् । अनयोर्मूलभाष्ययोर्निर्माणे श्रीमान् आनन्दाश्रमस्वामी श्रीमहर्षेरेकान्तभक्तेष्वन्यतमः पुण्डरीकपण्डितपुत्रः सुन्दरपण्डितः मूलभाष्यकारयो रतीवोत्साहमुद्दीपयन्नभवत्प्रेरकः । स एव सम्प्रति सभाष्यस्यास्य सद्दर्शनस्य मुद्रणव्ययभारवहनेनाकार्षीद्रमणाश्रमस्य सेवाम् । तस्मै महापुरुषसेविने श्रीभगवद्रमणमहर्षिचरणभक्ताय श्रीमते सुन्दरपण्डिताय सर्वेश्वरो दिशतु सर्वं कल्याणम् ।

इति

ग्रन्थप्रकाशकः

श्रीनिरञ्जनानन्दस्वामी ॥

---

# विषयसूचिका ॥

## भूमिकाविषयाः



## भूमिकापरिशिष्टम्

# सद्दर्शनग्रन्थविषयाः

| श्लोकः | विषयः | पृष्ठ |
|---|---|---|

# सद्दर्शनभाष्यभूमिका ॥

## I

### अद्वैतविचारः

'सदेव सोम्येदमग्र आसीत्' 'सर्वं खल्विदं ब्रह्म' 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इत्यादिवचनैरिदं सर्वमिति निर्दिष्टस्यास्य जगतः सच्छब्दवाच्यो ब्रह्मापरपर्यायः पुरुष एवोपादानकारणाख्यं मूलद्रव्यं भवतीति सिद्धम् ।

तथा च, तदैक्षत स तपोऽतप्यतेत्यादिवाक्यैस्तपसा जगन्निष्पत्तौ सिद्धायां तस्यैव सर्वनिमित्तकारणत्वं प्रतिपादितं भवति । एवं सर्वस्यास्य मूलतः परिकरतश्च सर्वा कारणसामग्री तस्मिन्नेकस्मिन्नद्वितीये ब्रह्मणि द्रष्टव्या ।

तथा सति, इदमहम्भावाश्रययो र्बाह्याभ्यन्तरयो र्जडचेतनपदवाच्ययो र्जगज्जीवयो रितरेतराश्रयत्वा दन्वेषणीयमूलस्वभावयोः सदेकपुरुषमूलत्वेनानयो रितरेतराश्रयत्वोपपत्ति रभ्युपगम्या भवति ।

कथं ? एकस्यैव सतो नानारूपत्वश्रवणा ज्जगज्जीवोभयविधत्व-मपि तपत ईक्षितुः कामयितुर्वा पुरुषस्यापारशक्तिपदवाच्यतपः-प्रभावायत्तं वक्तव्यम् ।

ईक्षणाख्यस्य तपसो जगज्जीवविसृष्टिनिमित्तभूतस्य चिच्छक्तिरूपत्वादेकस्यैव ईक्षित्रीक्षितव्यत्वेन परिणामपदव्यवहार्य मविभाज्योभयरूपत्वं सम्पद्यते । ब्रह्मणः परिणामाभ्युपगमे दुग्धस्य दध्नीव विनष्टिशङ्का मा भूदिति सुवर्णस्य भूषणभेदेष्विव सद्वस्तुस्वरूपस्य जगज्जीवभेदेषु स्थिरत्वमामनन्ति छन्दोगाः ।

सतः पुरुषस्य निरवधिकोपचीयमानविभवेन ईक्षणाख्येन तपसाऽसंख्येयांशेषु नानालोकनानाजीवभावेनाभिव्यक्तेषु सर्वत्र स्वरूपैकत्वं न बाधितं भवति । नानाभावत्वेऽप्येकस्वरूपत्वं एकस्वरूपत्वेऽपि नानाभावावस्थितत्वं चावगन्तव्ये । तस्मा'दात्मैवेदं सर्वं', 'इदं सर्वं तत्सत्यं स आत्मा', 'आत्मैव सर्वाणि भूतान्य भूत्' इत्येवंजातीयकै र्वाक्यैः स्वभावा दखण्डस्वरूप एक एव पुरुषः प्रभावा दनेकजगज्जीवप्रकारलक्षणो लक्ष्यत इत्यवगम्यते ।

अतीन्द्रियानुभवदृष्ट्या सद्वस्त्वेकमेवाद्वितीयं इन्द्रियानुभवदृष्ट्या त्वनेकं द्वन्द्वभूयिष्ठं भवती त्यनयो रतीन्द्रियेन्द्रियग्राह्ययो रेकानेकयो र्विरोधमवलोक्य एकस्य सत्यत्वमन्यस्य मिथ्यात्वं च प्रतिपाद्य विरोधं परिहरन्त्येके । एकस्यैवानेकरूपत्वश्रवणा-दनयोर्विरुद्धत्वं पुरुषबुद्ध्यपेक्षमेव न वस्तुगतम् । तथा सति प्रकारान्तरेण वरं विरोधपरिहारो यदिस्याद्विरोधः ।

लोके घटादिग्रहणे, मृण्मयोऽयं घट इति ज्ञानमन्तरेणापि घटरूपे गृहीते घटरूपस्य तद्ग्रहणस्य वा मृण्मयत्वज्ञानाभावाद्धेतो मिथ्यात्वं नोच्यते । न वा घटो मृण्मय इति सति ज्ञाने गृहीतस्य घटरूपस्य मिथ्यात्वं वक्तुं युक्तम् । मृण्मयत्वं घटरूपं चोभयमपि घटस्य याथार्थ्यसम्पादकं भवति । मृण्मयत्वे प्रतिपादिते घटरूपं न प्रतिषिद्धं भवति । तथा घटरूपे प्रतिपादिते मृण्मयत्वं च न प्रतिषिद्धचते । तस्माद्वस्तुगतं याथार्थ्यं पुरुषबुद्धेर्ग्रहणसामर्थ्येन द्विविधं भवतीति वक्तव्यम् । स्वरूपज्ञापकं घटस्य मृण्मयत्वं वस्तुगतं मुख्यं तत्त्वं । वस्तुगतमेव कम्बुग्रीवाद्याकृतिमत्त्वं तु गौणं तत्त्वम् । आकारादेर्द्रव्याश्रितत्वात् द्रव्यवाचकस्य स्वरूपपरस्य मुख्यत्वात् स्वरूपज्ञापकमेव मुख्यं तत्त्वं भवति । एकस्यैव चक्षुरादिभिर्नानाप्रकारेण ग्राह्यत्वात् कम्बुग्रीवाद्याकारादिमत्त्वं गौणं तत्त्वं भवति । कम्बुग्रीवाद्याकारादिमत्त्वस्य पृथग्ग्रहणं तु केवलं बुद्धीन्द्रियापेक्षं । एवं तत्त्वग्रहणेषु मुख्यगौणयो र्विविक्ततया ग्रहणे नास्ति विरोधः । फलं च भूयः । सत्यं च समग्रं भवति ।

जगज्जीवेश्वराख्यतत्त्वव्यवहारे चैवमेव सत्यमेकं ब्रह्म मुख्यं गौणमिति द्वेधावगन्तव्यं भवति । सत्स्वरूपस्य ब्रह्मणः सुवर्णस्य भूषणभेदवज्जगज्जीवप्रकारेण परिणामे सिद्धे जगज्जीवापेक्षयेश्वरपदवाच्यत्वं सिद्धचति । अखण्डस्वरूपमेव स्वप्रभावान्नानाप्रकारलक्षणलक्षितं भवति । तस्य जगज्जीवप्रकाराश्च द्रव्यस्य गुणा

इव तस्मिन्नेव ब्रह्मणि तादात्म्यसम्बन्धेनावस्थिताः प्रकारकला-विशेषगुणपदव्यवहार्याश्च भवन्ति ।

एषां भूतानां जन्मादिस्थानं जगदाख्यमिदं सर्वं घटस्याकारविशेष इव गुणकलावाच्यो ब्रह्मणः प्रकारविशेषो भवतीति हेतो रिदं सर्वं ब्रह्मणो गौणं तत्त्वं पाक्षिकं सत्यमिति वा भणितव्यम् । अस्य सर्वस्य जगतो मूलद्रव्यं घटस्य मृदिव सदाख्यं वस्त्वेवेति तु ब्रह्मणो मुख्यं तत्त्वं भवति । एवमुभयोरविरोधः । एकस्य मुख्यतत्त्वस्य निर्गुणस्य सत्यत्वं अन्यस्य गौणतत्त्वस्य मिथ्यात्वं चेति वादस्यास्वारस्यं स्पष्टं । सगुणनिर्गुणयोरेकत्र सम्भवादविरोधाच्च ॥

निर्गुणनिष्कलादिनिर्देशेन गुणातीतत्वादि विवक्षितं, न गुणादिरहितत्वमभिप्रेतम् । नैतन्मात्रं, ब्रह्मणो महतोमहीयस्त्वस्याणोरणीयस्त्वस्य चोक्तत्वा दुभयथाप्यतीन्द्रियत्वे सिद्धे, असंख्येयानामंशाना मनन्तानां गुणानामुत्पादकमपि तानतीत्य वर्तत इति निष्कलत्वादेस्तात्पर्यम् । अखण्डं तद्वस्तु सर्वशक्तं ब्रह्माख्यमनेकब्रह्माण्डकोटिमीक्षणात् स्वांशेन सृष्ट्वाऽनुप्रविष्टमपि सृष्टेषु लोकेषु न विनष्टं भवतीति ग्राह्यम् । अतो ब्रह्मणो देशकालातीतत्वेऽपि देशकालव्यापकत्वं विदो वदन्ति । तस्मात्सर्वत्र स्वांशभूतेऽणावपि स्वरूपेण पूर्णं भवति ब्रह्मेति, अतिविशालमद्वैतं प्रतिपादयन्नतिगहनार्थोऽयमागमो भवति—“ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥”

इदमुक्तं भवति । घटस्य मृण्मयत्वमिव सर्वस्यास्य जगतो मूलद्रव्यं सत्स्वरूपमदृष्ट्वा यद्ज्ञानं प्रवर्तते तदपूर्णं ज्ञानं भवति । तदेव पूर्णं सत्यमिति प्रतीतिरेव मिथ्याज्ञानं; न तु तदपूर्णं ज्ञानमेव मिथ्येति वाच्यं । अपूर्णज्ञानस्यातिस्थूलत्वात् सूक्ष्मतत्त्वानवगाहित्वादज्ञानप्रायत्वम् । तत्त्वसारं सत्स्वरूपमनवगम्य जगद्रूपमात्रग्रहण मनर्थहेतु र्भवतीति तत्र निन्दापरमज्ञानपदं प्रयुञ्जते । मूलस्वरूपग्रहणे तु ब्रह्मण एव सर्वात्मभावे स्पष्टे तस्य जगत्प्रकाराज्जीवप्रकाराच्चानन्यत्वं स्पष्टं विज्ञायेत । तदेव पूर्णं ज्ञानं, तदेव समग्रं सत्यम् ॥

## II

### सर्गविचारः

सच्चित्स्वरूपस्याखण्डात्मन ईक्षणतपश्चिच्छक्तिपदवाच्या न्निसर्गसिद्धव्यापारा न्निष्पन्नादस्माज्जगतो जायमानानां परिपाकभेदा दन्नमयप्राणमयमनोमयादिशरीरभेदवतां नानाजातीयानां भूतानां कर्मेन्द्रिय-ज्ञानेन्द्रिय-दिव्येन्द्रियाद्यभिव्यक्तिषु भिन्नसामर्थ्याना मेकमेव मूलमायतन मेकमेव मूलस्वरूपमित्यवधारणीयमिदं दुरवगाहं तत्त्वं स्मृत्युपस्थापनाय बहुकृत्वोऽभ्यसनीय मभ्यस्तं न दोषाय भवति ॥

सर्वेषु भूतेषु समानं हि ब्रह्म । तथाप्येषां क्रियाकरणपदार्थग्रहणानुभवस्वीकरणसामर्थ्येषु सुतरामस्ति भेदः । अयुगपदनेकत्र

जायमानत्वा न्नैषामस्ति समानं सामर्थ्यम् । स्रष्टृशक्ते र्देशकालात्म-कत्वस्वीकारात् सृष्टौ भेदसिद्धिः । पूर्णघननिश्चलदेशात्मावस्थाने बहिरुपलभ्यमानविषयाणा मनन्तभेदवत्त्वं सिद्ध्यति । शून्यवन्नि-रन्तरप्रचलत्कालात्मावस्थानेऽन्तर्निरन्तरमुद्भूतानां वृत्तीनां अनन्त-भेदवत्त्वं स्मरणादिव्यवहाराः बहिरपि सर्वात्रावस्थाभेदाश्च भवन्ति ॥

एवं चित्स्वरूपस्य स्रष्टुरपारशक्ते र्देशकालात्मपरिग्रहमन्तरेण सृष्टिरेव न भवति । असत्यां सृष्टावस्मदादीनां सत्ताव्यवहा-रस्यासम्भवः । व्यवहारानुभवसिद्धायां सृष्टौ अस्मदादीनां सत्ता सिद्धा । सर्जनानुग्रहाय स्रष्टृशक्तिस्वीकृताभ्यां देश-कालाभ्यां सर्वेषां वस्तुजातानां भूतानां च व्याप्यत्वमवगन्तव्यम् । बाह्याभ्यन्तरेषु देशकालयो रनन्तभेदसाधकत्वात् सर्वव्यापकसद्भावे महासत्तायां विविधा जातिः, एकैकस्यां जातौ अनन्ता व्यक्तयश्च भवन्ति । अन्नमयेऽस्मिन् जगति बह्वीषु पदार्थजातिषु एकै-कस्यामपि जातावनन्ताः पदार्थव्यक्तयः । सरित्पाषाणप्रभृतीनां वटादिवृक्षवर्गाणां पशुपक्ष्यादिजन्तूनां सतीषु साधर्म्यप्रतिष्ठासु नानाजातिष्वेकैकस्यां जातावनन्तवैधर्म्यविशिष्टा अनन्ता व्यक्तयो निष्पद्यन्ते । एवं मानुषजातावप्यसंख्येया व्यक्तयो भवन्ति ॥

अत एव देवदत्त इवाकारेण गुणेन वा यज्ञदत्तो न दृश्यते । अनुभवग्रहणक्रियाकरणोपकरणादानविनियोगसामर्थ्येषु मानुषाणां

प्रत्येकमत्यन्तमस्ति विशेषः । एषा सृष्टेर्वैचित्री यदभेदादखण्ड-स्वरूपादनन्तभेदानां निष्पत्तिर्भवति ॥

एवं सर्वाश्रयभूते निरवधिकाभेदस्वरूपे अखण्डात्मन्यनवधिकभेदेषु निष्पद्यमानेषु कचिन्मानुषव्यक्तेः "कि मिदं जगद्यत्रेदं मे शरीरं ? कुत इमानि भूतानि येषामुत्पत्तिस्थितभङ्गा उपलभ्यन्ते ? कोवाहं यस्यैतादृशी जिज्ञासा भवती "ति मीमांसा प्रवर्तते । एवं जातजिज्ञासस्य मानुषस्य किमपि बन्धज्ञानमुत्पद्यते, बन्धस्फूर्तेर्मुक्त्यपेक्षा च जायते । तस्माद्दृज्वी यस्यास्ति मुमुक्षा तं परिपक्कमाहुः । पक्कस्य मानुषस्याध्यात्मविद्याधिकारः । अत्र विमर्शरसिकानामियं भवति विचिकित्सा:—

"अखण्डात्मस्वरूपस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य सर्वभूतात्मभूतत्वे सिद्धे, कस्य बन्धो यस्मान्मोक्तुमिच्छा जायते ? किंस्वरूपो वा स बन्धः ? को वा स पाको येन पक्को भूत्वा मोक्षाधिकारी भवती " ति ।

अत्रोच्यते । परस्य ब्रह्मणः सर्वशक्तत्वाल्लोकानां सम्भवे, सृष्टं जगदिदं जडपदवाच्यं स्रष्टृचैतन्य मीश्वरपदवाच्यं च भवति । एकस्याखण्डात्मनः सृष्टिनिमित्तकमिदं द्रष्टृत्वं दृश्यत्वं चेत्यवधार्यं । अपरिच्छेदस्याखण्डस्वरूपस्य सद्वस्तुनो विषयिविषयात्मकः परिच्छेदस्सिध्यति । यद्यपि विषयिणीश्वरे विषयभूते लोके च भासमानं सच्चिदेकमेव वस्तु, तथापि विषयिभूतेश्वरस्य भासकत्वात् आत्मदृक्पदवाच्यत्वं विषयभूतलोकस्य

भास्यत्वा दनात्मदृश्यजडपदव्यवहार्यत्वं च ग्राह्यम् । अनन्त-परिच्छेदसमर्थस्य भासकचैतन्यस्य चित्प्रभावृत्ते राकारविशेषा एव सूक्ष्मावस्थासु ज्ञानक्रियात्मकचित्तप्राणरूपेण व्याप्रियमाणाः स्थूलावस्थायां जडपदवाच्यजगद्रूपपरिणामं प्राप्ता भवन्ति ।

अत एव समष्टिभूतलोकरूपस्य विषयस्य विषयिभूतज्ञातृ-रूपेश्वरेण तादात्म्यमाहुः प्राज्ञाः । "सर्वं खल्विदं ब्रह्मे"ति ब्रह्मणः सर्वभूतत्वप्रतिपादकश्रुतेरेषा हि युक्तिः । एवं ब्रह्माण्डरूपसमष्टि-परिच्छेदे पिण्डाण्डरूपव्यष्टिपरिच्छेदे वा विषयिचैतन्यस्य चित्प्र-भावृत्तिद्वारा विषयाकारावस्थितत्वं ज्ञेयम् । उक्तं चोमासहस्रे,

"न चेत्समष्टिविज्ञानविभूतिरखिलं जगत् ।
विषयव्यष्टिविज्ञानतादात्म्यं नोपपद्यते ॥
दृश्यते विषयाकारा ग्रहणे स्मरणे च धीः ।
प्रज्ञाविषयतादात्म्यमेवं साक्षात्प्रदृश्यते ॥"

अतः, विषयिचैतन्यस्य कारणभूतभासकत्वं विषयभूतस्थूल-लोकस्य भास्यत्वं चावगन्तव्यम् । स्थूलजडस्य विषयपदवाच्य-स्य लोकस्य कारणचैतन्यविषयिपदवाच्यस्य परमात्मनश्च मध्ये या चित्प्रभाविलसिता चित्तप्राणपदवाच्या ज्ञानक्रियामयी शक्ति र्निरन्तरं व्याप्रियते सा सूक्ष्मपदवाच्या भवति ।

एषा सूक्ष्मवृत्ति र्जगदीशयो र्जडचेतनयोर्भास्यभासकयो रन्तरे प्राणादिलोकपदवाच्या भवत्यध्यण्डम् । अधिपिण्डं तु,

प्राणादिकोशपदवाच्यं अन्नमयदेहस्यात्मनश्च मध्ये व्याप्रियमाणं सूक्ष्मशरीरं भवति ।

ज्ञानापेक्षया जडचेतनयोर्भास्यभासकभावः क्रियापेक्षया पाच्यपाचकभावो भवति । जगति चिता भास्यमाने पच्यमानं जड"मिदं जगत्" पक्वं भवति । जगति पक्वतां गच्छति ज्ञानक्रियाशक्त्यात्मकप्राणमनोमयाः मानुषव्यक्तय उत्पद्यन्ते । तदुक्तमुपदेशसारे,

" चित्तवायवश्चित्क्रियायुताः
शाखयोर्द्वयी शक्तिमूलका ।" इति ।

III

## बन्धादिविचारः

देशकालनिमित्तापेक्षसत्ताकाना मनन्तमानुषव्यक्तीनां परिपाकभेदात् क्वचिन्मानुषस्य बन्धज्ञानं जायते, क्वचिन्न । उत्पन्न बन्धज्ञानस्य मोक्षावकाशः, अनुत्पन्नबन्धज्ञानात् पशुप्रायात् पुरुषादुत्पन्नबन्धज्ञानः पक्वतरः, ततोऽपि मुक्तबन्ध इत्येष सर्वोऽपि परिपाकविभव श्चिच्छक्तिविलास इत्यवधार्यम् । एवं सर्वकारणभूतेन भासकचित्प्रकाशेन भास्यमानानां ज्ञानक्रियात्मिकानां वृत्तीनां जडपदवाच्यानां विषयाणां च परिपाकः संभवति । तस्मात्पाको वृत्तिगतो विषयगतश्चेत्युक्तं भवति ।

एवं स्थिते, बन्धस्वरूपं स्पष्टं भवति। विषयविषयिणो र्जड-चेतनयोः सम्बन्ध एव सूक्ष्मशरीरपदवाच्यो बन्धो भवति। ज्ञानक्रियाशक्तेर्निष्पन्नस्य सूक्ष्मशरीरस्य मनःप्राणात्मकत्वेऽपि मनसः सूक्ष्मतरत्वात् चित्प्रकाशसन्निहितत्वाच्च मन एव सूक्ष्मशरीरमिति क्वचिदुच्यते।

अनेन जडचेतनसंबन्धेन देहात्मबन्धसाधकेन सूक्ष्मशरीरेण देहे नित्यात्माभिमानः चिदात्मनि च जन्मादिशरीरधर्मवत्त्व-बुद्धिश्च भवति।

अथ कस्यायं बन्धः? उच्यते—सर्वाधारभूतस्य सर्वान्तर्यामि-चैतन्यस्य सर्वत्राध्यण्डमधिपिण्डं चाधिष्ठातृरूपाभिमानित्वादेव महत्यणौवा ज्ञानक्रियात्मक-व्यापारस्यावकाशो भवति।

अस्याभिमानिचैतन्यस्य सर्वत्र शक्तत्वमविस्मार्यम्। शक्ति-शक्तयोर्वाचैव विभागः शक्यते कर्तुं। न वस्तुतोऽनुभूतितो वा। शक्तिश्च सामर्थ्यरूपा भवति।

अणौ महति वा व्यष्टौ समष्टौ वा व्यक्तीनां प्रत्येकमुत्पत्ति-स्थितिलयानुकूलं यावदपेक्षं स्वभावतः सामर्थ्यमनुगृह्णाति हि चैतन्यम्। परिच्छिन्ने ष्वनन्तभेदरूपे ष्वन्नमयेषु पदार्थेषु, अन्न-प्राणमयेषु वृक्षेषु, अन्नप्राणमनोमयेषु मनुष्येषु, तत्तदुत्पत्ति-स्थितिभङ्गानुसारेणानुप्रवेशानुग्रहाधिष्ठानपदवाच्य मभिमानं स्व-भावतः कर्तुं शक्नुवाना शक्तिरियं भवति विचित्रा सच्चित्स्व-रूपस्य सर्वेश्वरस्य।

अथ जडदेहचिदात्मनोर्मध्ये व्याप्रियमाणस्य सूक्ष्मशरीरस्य देहात्मबन्धरूपत्वप्रतिपादनात् तदभिमानिचैतन्यस्य बन्धवत्त्वापत्तिरितिचेत्, नित्यसिद्धस्य चैतन्यस्य नास्ति बन्धः। न वा बन्धाभिमानित्वात्तस्य बद्धत्वं भवतीति वक्तुं युक्तं। सर्वत्र चिदभिमानित्वस्य निसर्गसिद्धत्वात्। तर्हि सूक्ष्मशरीरपदवाच्ये बन्धे कोऽपि स्याद्बन्धानुभवशाली येनाभिमानिचैतन्यं लक्षितं भवति। तं बन्धानुभवशालिनं स्वयं बन्धस्वरूपं, सूक्ष्मशरीराख्यप्राणमनोवृत्तिरूपेण तादात्म्यमनुभवन्तं, अभिमानिचैतन्यस्यानुग्रहेण वृत्तिविषयाकारतां आपद्य वृत्तीर्विषयांश्च स्वीकुर्वन्तं, आश्रयपरतन्त्रं, स्वतन्त्रंमन्यं, आत्मरूपेणाभासमानं अहङ्कारमाहुः। सोऽयमात्माभासो रूपे रूपे जनित्वा रूपाद्रूपं गच्छन् सततविचाली, रूपालम्बनो रूपततिप्रतिष्ठः स्वयं रूपवर्जितोऽहंपदस्य वाच्यार्थत्वेन जीवपदवाच्यो भवति। बन्धबन्धवतो राश्रयाश्रितयो रभेदाध्यवसायेनात्माभासोऽय महङ्कारजीवनो जीवः, बन्धो बन्धवांश्च भवति।

सूक्ष्मशरीरे प्राणमनोवृत्तिरूपे चिदात्मच्छायायाः प्रतिभासमानत्वा दात्माभासपदवाच्याहङ्कार माश्रित्यैव सूक्ष्मशरीरस्य व्यापारः प्रवर्तते। दीपस्य प्रभेवाहङ्कारस्य विस्तीर्णवृत्तिमयी विक्षेपिका शक्तिरेव सूक्ष्मशरीरपदवाच्या भवति। तस्माद्बद्धबन्धयोरहङ्कारतद्वृत्त्यो रभेदेनायमेवाहङ्कार आत्माभासो जीवो देहात्मबन्धः सूक्ष्मशरीरं मन इति च नामभिर्व्यवहृतः। बन्धवतोऽस्य

बन्धज्ञाना न्मुमुक्षा जायते । तस्मादस्यैव चिदाभासस्य बन्धमोक्षौ भवतः । आत्माभासस्यास्याहङ्कारस्य वृत्तिमयस्यापरिपक्वावस्थायां विषयाकारग्रस्तत्वं पक्वावस्थायां स्वमूलाश्रयात्मान्वेषणवृत्तिमात्रा-वस्थितत्वे आत्मेतरवृत्तिविषयेभ्यो विमुक्तत्वं च भवतः ॥

अथ बन्धमोक्षप्रदे शक्ती अत्रैवात्माभासविलसिते वृत्तिमये सूक्ष्मशरीरे गुप्ते बीजभूते भवतः । सर्जनप्रवृत्तायां चिच्छक्ताव-विभागाभेदात्मस्वरूपे विभक्तानां भिन्नानां व्यक्तीनां मूलस्व-रूपात् पृथग्भावानुभवसाधिका विषयाभिमुखीकरणदक्षा सर्वेषां भेदगताना मावरणानां सम्पादयित्री तिरोधानशक्ति श्चिज्जड-ग्रन्थिबन्धं विदधाना सर्वा अपि वृत्तीर्विषयग्रस्ता वितन्वाना सूक्ष्मशरीरात्मना पुरुषेऽवतिष्ठते । एषा स्वयं बन्धस्वरूपिणी बन्धाय भवति ।

अत्रैव बन्धमये सूक्ष्मशरीरे चिदात्मच्छायामुपधायात्मरूपेणा भासमानमहङ्कारं कल्पयित्वा तं बहुधा प्रेरयन्ती वृत्तिविस्तरात्मना स्थूलविषयग्रसनेन च सुखदुःखमोहादीननुभाव्य तदनुभवद्वारा परिपक्वं विदधाना चिज्जडयो र्देहात्मनो र्बन्धं मोचयित्वा सूक्ष्म-शरीरमय महङ्कारं एकाग्रात्माकारसूक्ष्मतमवृत्तिरूपं विधायानु-गृह्णात्यनुग्रहात्मिका शक्तिः ।

एवं तिरोधानशक्ति रात्मच्छायया तमहङ्कारं वृत्त्यात्मकावर-णेन विषयात्मकविक्षेपेण च जडाभिमुखं प्रवर्तयन्ती बन्धाय भवति । अनुग्राहकशक्तिस्तु विषयविक्षेपाद्वृत्तीर्विनिवार्य सर्वार्थ-

गामिनी वृत्ती रेकाग्राहङ्कारवृत्तावुपसंहृत्य तत्र तन्मूलभूताहमाकारात्मस्वरूपवृत्तिं प्रतिष्ठापयति । तस्माद् द्विविधेयं सर्जनप्रवृत्ता चिच्छक्तिस्तिरोधानानुग्रहात्मिका सूक्ष्मशरीरप्राणमनोमयवृत्तिदेहात्मबन्धापरपर्यायचिज्जडग्रन्थौ चिदाभासवाच्येऽहङ्कारे च सन्ततं व्याप्रियमाणा भवति ।

इति संक्षेपतो बन्धस्य बन्धवतः पाकस्य च विचारः कृतः ।

## IV

### अथाहंपदार्थविचारः

'सर्वं खल्विदं ब्रह्म' 'एकमेवाद्वितीयं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञानं ब्रह्मे'त्यादिपरमार्थसत्यप्रतिपादकेषु वाक्येषु प्रथमपुरुषं प्रयुज्य सृष्टिप्रकरणे 'ऽनेन जीवेनात्मना नामरूपे व्याकरवाणि' 'सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं नामाभवत्' इति उत्तमपुरुषप्रयोगश्रवणात् तत्सत्यं वस्तु अहंपदस्य परमार्थभूतः पुरुष आत्मा भवतीत्यवगम्यते । अतः सर्वभूतात्मभूतात्मा सर्वेश्वरः पुरुषः सर्वत्र सृष्टावहंप्रत्ययस्याश्रयः सन् अहंपदस्य परमार्थो भवति । अग्नेर्विष्फुलिङ्गेष्विव ब्रह्मणो नानाजीवे ष्वभिव्यक्तेषु देवदत्ते जीवव्यक्तावहंप्रत्ययस्याश्रयो य आत्मा स एव लक्ष्यो भवति । सर्वभूतात्मभूतात्मा हि ब्रह्म । सर्वेषां भूताना मात्मभूतो य आत्मा स ह्यद्वितीयः सर्वेश्वरः परमात्मा । तस्मा द्देवदत्तयज्ञदत्तादिषु

व्यक्तिषु प्रत्येकमहमाश्रयभूतात्मैवाहंपदस्य लक्ष्यार्थो भवति । स चात्मा व्यक्तौ व्यक्तौ पृथगहंभावानुभूतेराश्रयो भवति । सर्वाश्रयभूताव्यक्ताखण्डात्मन एव व्यक्त्याश्रयभूतात्मभूतत्वाद् व्यक्तजीवाश्रयभूतात्माऽखण्डात्मनो न भिन्न इत्यभेदसिद्धान्त-रहस्यम् ।

इदमुक्तं भवति । अहंपदस्याव्यक्ताखण्डपरब्रह्मात्मा परमार्थः । स एवानन्तजीवव्यक्तीना मात्मरूपेणाश्रयभूतत्वाल्लक्ष्यार्थो भवति । व्यक्तिषु प्रत्येकं लक्ष्यभूतस्यान्तरात्मनोऽनुग्रहा ज्जडचेतनोभय-संबन्धवत्प्राणमनोमयोपाधिपदवाच्येन सूक्ष्मेण शरीरेण तादात्म्य-मनुभव न्नात्माभासोऽहङ्कार एवाहंपदस्य वाच्यार्थो भवति ।

अहंपदवाच्यार्थभूतानां अनन्तानां व्यक्तिगतानां अहङ्काराणां सूक्ष्मशरीरवत्त्वा ज्जीवपदवाच्यत्वं भवति । तस्मादहंपदवाच्यार्थः प्रतिजीवव्यक्ति भिन्नस्सन् सर्वत्र व्यक्तिषु पृथगनुभवान् परिगृह्णन् पृथग्व्यक्तित्वानुकूलं व्यवहरति । कालत्रयसंबन्धिनं अन्वयिनं सर्वार्थदर्शिनं सर्वत्र व्यक्तिष्वहंपदस्य लक्ष्यार्थभूतं व्यक्त्या-श्रयमेकमात्मानं आश्रित्यैव जीवाख्यस्याहङ्कारस्य व्यवहारः प्रवर्तते । अतो जीवात्मेति लोके व्यवहारः । भूतात्म-देहा-त्म-प्राणात्म-विज्ञानात्मादिपदव दभिमानिचैतन्यपर मात्मपदमव-गन्तव्यम् । अहङ्कारजीवनस्य चिदाभासस्य जीवस्य जन्मवत्त्वाद-नित्यत्वम् । जीवव्यक्तेराश्रयभूतचिदात्मा तु नित्य एव । तस्याखण्डात्मस्वरूपानन्यत्वात् ।

एवञ्च, अहंपदस्य परमार्थ एक एव परमपुरुषोऽनेकजीव-व्यक्त्याश्रयाभिमान्यात्मत्वेन लक्ष्यार्थः, व्यक्तिगतचिदाभासानु-ग्राहकत्वेन वाच्यार्थश्च भवतीत्यवधार्यम् । तस्मात् त्रिविधमहं-पदार्थं विविच्य गृह्णीयात् । तथा ग्रहणं परामार्थबोधोपयुक्तं भवति ।

## V

### अथ मोक्षो विचार्यते

देहात्मबन्धहानं चिज्जडग्रन्थिभेदरूपं मोक्षमाहुः । चिदा-भासस्याहङ्कारस्य विलसितं बन्धस्य स्वरूपमिति निरूपितत्वा-दहङ्कारस्य प्रणाश एव मोक्ष इति प्रतिपाद्य तन्नाशायोपाया-नुपदिशन्ति शास्त्राणि । अनष्टाहङ्कारस्य बद्धपुरुषस्य विनष्टा-हङ्कारस्य मुक्तपुरुषस्य च विशेष इतरत्र विचार्यते । अत्रैकोऽभेदः संक्षिप्योच्यते । अहङ्कारस्य नाशान्नास्ति व्यक्तिनाशः । व्यक्तित्वो-ज्जीवनभूत आत्मा जीवाहङ्कारस्य नाशात्प्राक्परं चैक एवाभिन्न-स्सन् अवस्थात्रयसाक्षी विद्यते । अयं व्यक्त्यभिमान्यात्माऽ-व्यक्ताखण्डात्मैवेति पूर्वमुक्तम् । चिद्रूपस्यास्य व्यक्त्यभिमानित्वा-न्मुक्तपुरुषस्य देवदत्तस्याहङ्कारनाशात् प्राग्बन्धदशानुभूतयः अहङ्कारनाशात्परं मुक्तदशायां स्वस्यातीतानुभूतित्वेन स्मर्तुं भवन्ति शक्याः । बद्धस्य मुक्तस्य वा देवदत्तस्य जीवितानु-भूतयः बद्धस्य मुक्तस्य वा यज्ञदत्तस्य सम्बन्धिन्यो न भवन्ति ।

अतो बद्धानां मुक्तानां वा व्यक्तित्वं अनष्टे प्रणष्टे वाहङ्कारे न नश्यतीति सिद्धम् ।

यद्यपीदमनुभवैकवेद्यं तथापि जिज्ञासोर्विचाररसिकस्य श्रद्धाभिवर्धनाय प्ररोचानार्थं च बहुभिर्लक्षणैर्देहप्राणचित्तविविधविचित्रपाकोपेतं मुक्तपुरुषस्वरूपं रमणगीतासप्तमनवमचतुर्दशाध्यायेषूपदिष्टम् ।

अथ बन्धमोक्षयो रात्माभासाहङ्कारपदवाच्यजीवगतत्वात् किं मोक्षोपायो जीवगत उत नेति संशये प्राप्ते, उभयथाप्युपपद्यत इति समाधेयम् । यदि बन्धहेतुर्जीवो भवति, तर्हि मोक्षसाधनमपि तदायत्तं भवति । जीवस्य चिज्जडसम्बन्धित्वाज्जडांशेन बन्धश्चिदंशेन मोक्षश्च शक्यौ भवतः । वस्तुतस्तु, जीवस्यैव बन्धरूपेणोत्पन्नत्वोक्ते र्नायं जीवो बन्धहेतुर्भवति । अयं च बन्धस्तिरोधानशक्तेरनुग्रहाच्च मोक्ष इति निरूपणान्मोक्षः पाकाधीन इति वक्तव्यम् । अनुग्रहात्मिका सर्वेश्वरशक्तिश्चिदाभासं जीवं परिपक्वं वृण्वाना तदाभासत्वमपोह्य तद्व्यक्तौ लक्ष्यभूतशुद्धाहंभावरूपेण स्वस्वरूपेण भाति । "यमेवैष आत्मा वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा"मिति श्रुतिश्चैवमुपपद्यते ।

प्रतिपादितं च पूर्वं सृष्टौ चिच्छक्ति र्मायाविलसितेन तिरोधानेन देहात्मबन्धिका, चित्प्रभानुग्रहेण बन्धमोचिका च भवतीति । बन्धमोक्षयोरात्माभासजीवगतत्वोपन्यासेन जन्मादि-

विकाराश्चोक्ता भवन्ति । न तु जीवव्यक्त्याश्रयभूतात्मन इति स्मृतावुपस्थेयम् ।

## VI

### साधनसिद्धिविचारः

यद्यनुग्रहा ज्जीवस्यात्माभासत्वप्रणष्टिद्वारा शुद्धाहंभावरूप आत्मलाभो भवति, तर्हि पुरुषकारस्य वैयर्थ्यापत्ते र्जीवमुद्दिश्योपदिष्टानां शास्त्राणा मानर्थक्यशङ्का न कार्या । स्वतन्त्रंमन्यस्यात्माभासस्य जीवस्य यावदात्मपरतन्त्रत्वानुभूति पुरुषकारस्यानिवार्यत्वं प्रयोजनं च भवतः । अनुग्राहकचित्प्रकाशस्यानुग्रहश्चिदाभासे जीवे प्रेरणरूपेण फलितो भवति । क्वचिदात्मस्वरूपानुसन्धानेन, क्वचिद्भारसमर्पणरूपप्रपत्त्या क्वचित्साधारण्येन शास्त्रेष्वनुपदिष्टैरुपदिष्टैर्वा प्रसिद्धैरप्रसिद्धैर्वा साधनभेदैः, राजयोग-मन्त्रयोग-कर्मयोग-भक्तियोग-ज्ञानयोगाद्यन्यतमेनोपायेन सर्व - समयलक्ष्यभूतमीश्वरं सकलं निष्कलं वा प्राप्तुं आत्मानमवगन्तुं वा पुरुषकारः प्रवर्तते। तस्माज्जीवप्रयत्नस्य परमानुग्रहस्य च नास्ति विरोधः । अनुग्रहस्यैवोपकरणं भवति पुरुषकार इत्युक्तं भवति ।

अद्वैताचार्यस्य भगवतः शङ्करस्य सद्दर्शनोपदेष्टुर्भगवतः श्रीरमणस्य चोभयो रौपनिषदसिद्धान्ते ब्रह्मात्मैक्यवादे तुल्यमभ्युपगतेऽपि क्वचित् सन्ति भेदाः । उपनिषत्सु मृग्यान्यस्पष्टमुक्तानि वा जगन्मिथ्यात्ववादावकाशदानि वाक्यानि । भगवान्

महर्षिस्तु जगन्मिथ्यात्ववादस्य वैराग्यसाधनत्वमात्रमनुगृह्णाति। भगवच्छङ्करमतानुयायिनां ग्रन्थेष्वनुक्तानि कानिचित् अस्पष्ट-मुक्तानि कानिचित् अपव्याख्यानावकाशप्रदवाक्यविवृतानि च कानिचित् तत्त्वानि, भगवन्महर्षिमुखोपदिष्टेषु **अक्षरमणमाला-रुणाचलाष्टकादिद्राविडग्रन्थेषु, रमणगीतोपदेशसारारुणा-चलपञ्चकसद्दर्शनेषु** संस्कृतग्रन्थेषु च स्पष्टं दृष्टानि भवन्ति।

उपासनमवश्यं कर्तव्यम्। शास्त्रविचारादन्यस्सूक्ष्मतर आत्म-स्वरूपविचारः। शास्त्रविचारो न जिज्ञासा भवितुमर्हति। आत्म-स्वरूपप्रेप्सैव जिज्ञासा। सा च देहग्रस्तं प्राणं देहात्पृथक्कृत्य जीवत एव पुरुषस्य हृदये स्वात्मनि तं नियोजयन्ती जगदाकार-ग्रस्तं मनश्च जगतो विमुखीकृत्य स्वात्माभिमुखं विधत्ते। ईदृशी प्रेप्सैव जिज्ञासा। तस्मा दनधीतवेदवेदान्तस्यानुपनीत स्यावर्णस्यानाश्रमिणोऽपि जिज्ञासो रध्यात्मविद्याधिकारः।

इत्यादयो भगवतः श्रीरमणस्य सिद्धान्ता अत्रोदाहरणानि भवन्ति।

यथा छन्दोगानामाम्नाये उद्गीथसंवर्गवैश्वानराक्षिपुरुषभूमद-हराद्या विद्या ब्रह्मप्राप्तये उपदिश्यन्ते, तथेहापि व्याचिख्या-सिते दर्शने **हृदयस्थब्रह्मात्मावगमाय** बहूनि विद्यास्थानीयान्यु-पासनानि सूक्ष्मतत्त्वानुसन्धानरूपविचारप्रभृतीन्युपदिष्टानि। वा-क्प्राणमनोनियमनात्मान्वेषणमज्जनादिमार्गाः निर्दिष्टाः। दृग्दृ-श्यादिद्वन्द्वस्य ज्ञातृज्ञानज्ञेयादित्रिपुट्याः देशकालयोः तद्युष्म-

दस्मत्प्रत्ययानामेकाग्रेण तत्त्वविचारेण च सम्पादितनाडीमथनेन शरीरप्राणमनोगतबहुविधाविद्याग्रन्थीनां विप्रमोक्षद्वारा ब्रह्मात्म-सद्भावस्य हृदयगतत्वानुभूतिरुपदिष्टा । प्राधान्येनोपदिष्टा तु सद्विद्या । सा च हार्दोपासनरूपा । संप्रदायप्रसिद्धदहरविद्या-विलक्षणेयम् ।

परब्रह्मणो वाङ्मनोतीतत्वान्मन्दाधिकारिणामुपासनार्थं दहरा-काशाख्ये हृदये सगुणं ब्रह्म मनसा कल्पयित्वा भावयेत् इति इदं साम्प्रदायिकमुपासनम् । अस्माद्भिन्नेयं महर्षेः सद्विद्या । नेहावश्यकं ब्रह्मणः सगुणनिर्गुणविचारजन्यं ज्ञानम् । न चावश्यकं प्रादेशिकस्य हार्दपुरुषस्य लक्ष्यत्वेन कल्पनम् । नापि तत्र मनःकल्पितदहराकाशे सगुणब्रह्मणो ध्येयत्वेन कल्पना । सर्वभूतं सद्भावाख्यं ब्रह्म जीवव्यक्त्याश्रयभूतात्मरूपेण हृदये निरन्तरमहमहमिति भातीति प्रतिपादनात् , तीव्रजिज्ञासाविष्टेन प्राणेन मनसा वाऽहंवृत्तेर्मूलस्वरूपान्वेषणे हृदयग्रन्थेर्भेदाद्देहात्म-बन्धे विगलिते ऽहंवृत्तेः स्वरूपभूतः स्वात्मा हृदये स्वयं भातीत्यनुभवो जायते । अनेनात्मलाभेन ब्रह्मैव जीवस्य स्वात्म-रूपेण हृदि ज्वलतीति ब्रह्मात्मैक्यानुभवश्च फलति । तस्मादात्म-स्वरूपनिष्ठा ब्रह्मात्मैक्यानुभूतौ पर्यवस्यतीति सद्विद्याख्यस्य हार्दोपासनस्य रहस्यम् ।

अत्र सद्विद्यायां सिद्धायां हृद्ग्रन्थिभेदाद्देहात्मबन्धमोक्षे जाते, सहजात्मनिष्ठायां लब्धायां, जीवेश्वरयोस्तादात्म्यभावो हृदये

सिद्धोऽनुभूयते । तथा च सद्दर्शनस्वरूपाख्यानावसरे 'सद्व-स्तुनि प्राप्ततदात्मभावा निष्ठैव सद्दर्शनमित्यवेहि' इति आत्मनिष्ठैव सद्दर्शनमिति कैवल्यनिष्ठां प्रतिपाद्य, आत्मदर्शनस्वरूपाख्याने 'स्वयं तदन्नीभवनं तदीक्षे'ति जीवस्येशभोग्यत्वप्रतिपादनेन सायुज्यमुपपादयतीदं शास्त्रम् । जीवेश्वरयोरविशिष्टसद्भावात्म-स्वरूपापेक्षया सहजात्मनिष्ठाख्यकैवल्यस्थितिरुपदिष्टा । जीव-व्यक्तेस्तदाश्रयभूताव्यक्ताखण्डात्मपदवाच्यसर्वेश्वरस्य च सम्बन्ध-मपेक्ष्य भोक्तृभोग्यभावाकारतादात्म्यसम्बन्धप्रतिपादक मन्नीभव-नाख्यं सायुज्यमुक्तम् ।

एवं हार्दोपासनस्य फलभूता स्थितिः कैवल्यात्मनिष्ठा सायु-ज्यसम्पत्तिश्चेति द्विधा गृहीतुं शक्यत इति धिया सद्दर्शनस्यैकत्र, आत्मदर्शनस्यान्यत्र च, स्वरूपविवरणमुपपादितम् ।

जीवत एव मुक्तस्य पुरुषस्य स्थितिरेवं द्विधा ग्रहणक्षमेत्यव-लोक्य निष्कलनिष्ठासकलसायुज्यप्रतिपादकाभ्यां द्वाभ्यां मङ्ग-लानुष्ठानश्लोकाभ्यामुपादिशद्भगवान्महर्षिः ।

अथ जीवतो बद्धस्य मुक्तस्य च भेदनिरूपणावसरे, हार्द-विद्यासिद्धस्य "देहे हृदि दीप्त आत्मा, आक्रम्य देहं च जगच्च पूर्णः" इति परमरहस्योद्घाटकवाक्यस्य तात्पर्यमनुसन्धेयम् । बद्ध-पुरुषस्य देहात्मबन्धवतः परिपाकवशेन बन्धे मुक्ते, जले विलीनो लवणखण्ड इव देहे गूढचरः श्रेष्ठाख्यमुख्यप्राणस्य चित्प्रकाशो देहाद्विनिवर्त्य, स्वोदयनिलयं आत्मस्फूर्तिस्थानं हृदयं प्रविश्य

हृदि नित्यसिद्धस्य ब्रह्मात्मनो वशं गत्वा तेनैव प्रेरितस्सन् बन्धमार्गं परित्यज्य मुक्तमार्गमवलम्ब्य, अमृतात्मब्रह्मनाडीपद-वाच्य-मुख्यप्राणनाडीमार्गेण हृदयान्निर्गत्य देहमाक्रम्य परितः प्र-काशमानं जगच्चाक्राामन्नेव ज्वलति। तस्मादात्मनो निश्चलत्वेऽपि तत्प्रकाशव्यापारस्य स्वयं परिपाकरूपस्य परेषां परिपाकप्रदस्य न कदापि जडस्येवालस्यं भवति ।

"नालस्यं सहजस्थितौ ।"

"तपस्तदेव दुर्धर्षं या निष्ठा सहजात्मनि ।"

"तेन नित्येन तपसा भवेत्पाकः क्षणे क्षणे ।"

"ज्ञानं शक्तेरपेतं यो मन्यते नैव वेद सः ।"

"सहजायां स्थितौ पाकाच्छक्तीनामुद्भवो मतः ।"

"सा स्थितिः परमा शक्तिः सा शान्तिः परमा मता ।"

"शरीरस्थं मुक्तबन्धं जीवन्मुक्तं प्रचक्षते ।"

"जीवन्मुक्तस्य कालेन तपसः परिपाकतः।
स्पर्शाभावोऽपि सिद्धःस्याद्रूपे सत्यपि कुत्र चित् ॥
भूयश्च परिपाकेन रूपाभावोऽपि सिद्ध्यति ।
केवलं चिन्मयो भूत्वा स सिद्धो विहरिष्यति ॥"

(श्रीरमणगीता)

इत्येवंजातीयकैः श्रीभगवन्महर्षेरुपदेशैर्जीवन्मुक्तस्य पुरुषस्य महिमावगम्यते ।

VII

## अनुग्रहः

मनुष्यलोके पक्वस्य पुरुषस्य तमसः पारं दर्शयन् कारणगुरुर्भगवान् सनत्कुमारः स्कन्दापरपर्याय इत्यौपनिषदं रहस्यम् । सूक्ष्मतत्त्वविचाराध्यात्मविद्यासाधनाद्यै राभ्यन्तरपुष्टिप्रदैराहारनियमैः परिपक्वस्य शुद्धसत्त्वस्य ध्रुवस्मृतिलाभेन समस्ताविद्याग्रन्थीनां विप्रमोक्षे जाते, मुख्यस्य हृदयगतस्याहंधीग्रन्थे र्मोक्षणद्वारा तमसः पारं दर्शयितुं सर्वेश्वरस्यानुग्रहः स्कन्दसनत्कुमाराभिधकारणगुरुद्वारा भवति । अयं कारणगुरुः पुराणेषु ब्रह्ममानसपुत्र इत्यभिहितः सनत्कुमारः, शिवतेजस्संभूतकुमारः स्कन्द इति च प्रसिद्धः, काले काले परिपक्वं युक्तं पुरुषविशेषमनुगृह्याविश्य प्रविश्य तत्रांशेनावतीर्य वा मानुषसङ्घक्षेमाय महीमण्डलेऽध्यात्मविद्यासन्तति मविच्छिन्नामादधानोऽधितिष्ठति । तथाऽवतीर्णेष्वनुगृहीतेष्वाविष्टेषु वा परिपक्वेषु बहुषु मुक्तेषु सत्सु, तेषां मुक्तानामपि व्यक्तिभेदात् सामर्थ्यभेदात् तत्तत्कालमानवसङ्घपरिपाकानुसारेण च, ब्रह्मात्मानुभवस्यैकत्वेऽपि, तद्विवरणविज्ञानप्रवचनेषु लोकयात्रासु सुतरां भवति विशेषः ।

तस्यैव भगवति पाराशर्येऽस्मिन्रमणे महर्षौ निजकलया प्रादुर्भूतस्य कारणगुरोरुपदेशभूतमिदं शास्त्रम् । सत्तत्त्वविचारात्मकविषयसंबन्धमनुसृत्य **सद्दर्शनम्** ।

# VIII

## ग्रन्थावतरणम्

सद्भावस्य सर्वसंबन्धवत्त्वेऽपि आत्मसंबन्धस्य प्राधान्यात् आत्मनोऽहंपदार्थत्वात् अहंतत्त्वमेवेह प्राधान्येनोपन्यस्तम् । अहंतत्त्वविचारप्रधानस्यास्य शास्त्रस्य सद्दर्शनमिति नामोपपद्यते । "युष्यस्योर्मदिगि"ति औणादिकमदिक्प्रत्ययपरकात् सत्तार्थकाद्धातोर्निष्पन्नस्यास्मच्छब्दस्य प्रथमैकवचनान्तमहंपदम् । अस्मीत्यहमिति अहंपदस्य रूपसिद्धिरवगन्तव्या । अहमस्मीत्यहमाकारवृत्तिद्वारा अहंमूलात्मस्वरूपावगमेन सर्वसद्भावस्वरूपज्ञानं भवतीति हेतोः सद्भावसिद्धान्तेऽत्र शास्त्रे अहंपदार्थस्वरूपावगमाय बहवो मार्गाश्चोपदिष्टाः । तस्माद्युक्तं सद्दर्शनमित्यस्य शास्त्रस्य नामकरणम् ।

नेदं शास्त्रं शैववैष्णवद्वैताद्वैतादिसिद्धान्तानां खण्डनाय मण्डनाय वा प्रवृत्तम् । नेह न्यायवैशेषिकादिदर्शनेष्विव तत्त्वपर्यालोचनपद्धति रवलम्बिता । न वेदं ब्राह्मणवाक्यवेदान्तवाक्यतात्पर्यप्रतिपादक-धर्मब्रह्ममीमांसावदाप्तवाक्यानां श्रुतीनां वार्थसमर्थनायारब्धम् । शठकोपमाणिक्यवाचकादीनां द्राविडवेदवाक्यानीव, उपनिषदां वाक्यानीव स्वतन्त्रप्रवृत्तानि स्वानुभूतिमूलानि निगमागमप्रमाणवाक्यतात्पर्यप्रोद्बलकान्यपि स्वतन्त्राणि भगवतः श्रीरमणस्य महर्षेर्वाक्यानि ।

अस्य मुखारविन्दाद् द्राविडभाषया शुक्लच्छन्दसि सहमङ्गल-पद्याभ्यां द्विचत्वारिंशत्पद्यात्मकं निर्गतमिदं सद्दर्शनं शास्त्रम् । अस्य संस्कृतभाषया संपूर्णावतरो भगवतो वासिष्ठगणपतिमुने-र्वाग्रूपोऽयं ग्रन्थश्चतुश्चत्वारिंशदुपजातिपद्यैर्निबद्धः **सत्प्रत्यया** इत्युपक्रान्तो **मुनिवाग्विभातीति** समाप्तश्च भवति ।

एवं विषयसंबन्धमनुसृत्य सद्दर्शनमिदं दर्शनकारसम्बन्ध-मनुसृत्य **रमणदर्शनम्** । अस्य प्रामाण्यविचारो ग्रन्थस्यान्ते "अमानुषश्रीरमणीयवाणीमयूखभित्तिर्मुनिवाग्विभाति" इति पदस्य व्याख्याने द्रष्टव्यः ।

षोडशे वर्षे भाष्यमद्वितीयं विरच्य ब्रह्मात्मैक्यं प्रतिपाद्य कारणगुरोः
कार्यं कृत्वा जगद्गुरुपदं प्राप्तवान्भगवान् **शङ्करगुरुः** ।

षोडशे वर्षे शैवसमयाचार्यचतुष्टयालङ्कारभूतः परमशिवभागवतो
जगत्पितरमात्मपितरमुपास्य कृततत्कार्यो भौमं
जीवितं परिसमाप्य पितुरन्तिकं गतवान् **श्रीज्ञान-
संबन्धमूर्तिः** ।

षोडशे वर्षे एव समाप्ते मृत्युभयान्मृत्युञ्जयमात्मन्येव प्रपद्य
हृद्यात्मानं देहात्पृथगवगम्य तत्प्रेरणेन जगत्पितरमा-
त्मपितरं गृहीत्वा तदन्तिकं जीवन्नेव प्राप्तवानयं
**रमणो भगवान्महर्षिः** ।

मुमुक्षुलोकाय श्रीशङ्करगुरोरिवाध्यात्मबुद्धिभिक्षां ददानस्य, श्रीज्ञानसंबन्धमूर्तेरिव परमात्मनि पितृभक्तिभाग्यमादधानस्य,

आभ्यन्तरजीवनप्रभां बाह्यजीवने स्वभावतोऽभितः प्रसारयतः, अदूरगामिधीमल्लोकोद्बोधनाय स्वीयोत्तुङ्गस्थिते रुत्तारकगुणाशयान् गृहीतृसामर्थ्यानुरूप मवतार्यानुगृह्णतः, मायामुक्तस्य मायाप्लुतस्य, अपरिग्रहस्य मुक्तसेनापतेः, भगवतो रमणस्य महर्षेर्दिव्यं जीवितं उर्व्यामवतीर्णं "इह चेदवेदीदथ सत्यमस्ती"ति परमं रहस्यं प्रकाशयद् जयति ।

---

## भूमिकापरिशिष्टम्

जीवव्यक्तिविवेकः—अपूर्वप्रायः कृतोऽयं बहुधा विचारः। क्वचित् जीवस्याहङ्कारपरत्वं क्वचित् चित्क्रियापरत्वं क्वचित् व्यक्तिपरत्वं चोक्तम्। व्यापारभेदान्नामभेदो न पर्यायपदानीति (२६ श्लो) "अहङ्कृतिग्रन्थिविबन्धसूक्ष्मशरीरचेतोभवजीवनामे"ति श्लोकार्धे व्याख्यातम्। अहङ्कारनाशान्नास्ति व्यक्तिनाश इति च प्रत्यपादि।

नेमानि वाक्यानि व्यामिश्राणीति तत्त्वावगतिमिच्छतां सत्स्वपि सिद्धान्तभेदेषु सामरस्यमन्विच्छतां अवहितधियां समाधायक-युक्तियोगस्तत्र तत्र भाष्ये भूमिकायां च समपादि। इह तु संशयनिरासाय जीवव्यक्तिविचारसारः सङ्गृह्यते।

चित्तवाय्वात्मक-चित्क्रियायुतत्वमुपदिष्टमुपदेशसारे। यावच्चित्क्रियामयमिदं सूक्ष्मशरीरं तावद्व्यक्तित्वं, आकृतिसापेक्षत्वाद्व्यक्तेः। सूक्ष्मस्यापि शरीरस्य देशकालव्याप्यत्वेन

जन्मादेः सिद्धत्वात्, व्यक्तेरव्यक्तादित्वमिव अव्यक्तान्तत्वमपि अव्यक्तायत्तमेवेत्यवगन्तव्यम् ।

सशरीरस्य बद्धस्य मुक्तस्य वेह लोकयात्रासु ज्ञानक्रियात्मक-मनःप्राणव्यापारस्याश्रयभूतं सूक्ष्मशरीरं उपाधिपदवाच्यं भवति। तच्च अपक्वावस्थायां जडचेतनयोर्देहात्मनोर्बन्धकं, जडांशभूयस्त्वेन जडप्रायं जडग्रस्तं, आत्मरूपेणाभासमानेनाहङ्कारेणाधिष्ठितं व्याप्रियते ।

पक्वावस्थायां चिदंशभूयस्त्वेन जडान्निवृत्तौ देहबन्धाद्विमुक्ति-र्भवति जीवव्यक्तेः ।

एवं परिपक्वे चिदंशभूयिष्ठे सूक्ष्मशरीरे, अहंपदवाच्याहङ्कारे च विलीयमाने, अहंपदशक्यसंबन्धवल्लक्ष्यभूतस्य शुद्धाहंभावस्य स्फूर्तिः स्वतः सिद्धा भवति । सूक्ष्मशरीरं च शुद्धाहंभावसदृशं कमपि दिव्यं संस्कारं प्राप्य, अखण्डाव्यक्तस्वरूपस्यात्मनो व्यक्तिस्थानं, व्यक्तेश्चित्क्रियाव्यापारस्याश्रयभूतं च भवति । अत एव,

"अथाहमन्यत् स्फुरति प्रकृष्टं नाहंकृतिस्तत्परमेव पूर्णं"
"हृदयान्नापरः परः" "अहंकृतिं यो लसति ग्रसित्वा . . .
किंचिद्विजानाति स नात्मनोऽन्यत्" इत्याद्युपदेशः ।

तस्माज्जीवन् देहबन्धान्मुक्तः भेदाभासवशमगत्वैव भेदानभेदे पश्यन्नभेदं भेदेष्वनुभवन् परबुद्धिगतभेदव्यवहारविज्ञोऽपि सर्व-

तन्त्रस्वतन्त्र-नित्याव्यक्तस्वरूपेण आत्मना सर्वेश्वरेण विनीयमान-जीवयात्रात्मकहार्दवैभवःसन् पुरुष उत्क्रान्तोऽनुत्क्रान्तो वा स्थूलदेहनिरपेक्षमखण्डात्मन्यत्र वा लोकेऽमुत्र वा सुप्रतिष्ठितः सुप्रतिष्ठितः ॥

---

## सद्दर्शनम् (सभाष्यम्)

**सत्प्रत्ययाः किन्नु विहाय सन्तं ?**
**हृद्येष चिन्तारहितो हृदाख्यः ।**
**कथं स्मरामस्तममेयमेकं ?**
**तस्य स्मृतिस्तत्र हृदैव निष्ठा ॥ १ ॥**

भाष्यम्—अथ सद्दर्शनस्यायमादिमः श्लोको भवति। **सत्प्रत्यया** इति—**सत्प्रत्ययाः किन्नु विहाय सन्तं?** इति प्रश्नरूपेण वाक्येन सन्तं कमपि भावमन्तरेण सत्ताप्रतीतिर्नैव जायत इति स्थूलधियामपि सुबोधम् । एकमेव सद्भावमुपजीव्य बहवः सत्प्रत्ययाः प्रवृत्ता इति प्रतिपादनार्थोऽयं **सत्प्रत्यया** इति बहुवचनप्रयोगः । सदिति प्रत्ययाः सत्प्रत्ययाः । सत्स्वपि प्रत्ययानां भेदेषु एक एव भावस्तेषां समाश्रयणं भवतीति हेतोर्बाह्यविषयानाभ्यन्तरवृत्तीर्वा निमित्तीकृत्य प्रवृत्तानां प्रत्ययानां सद्भावद्योतकत्वमुक्तं भवति ।

नानानामरूपात्मके जगति बहूनां भावानां सत्ताजातिः प्रतीयत इति न मन्तव्यमित्यनुभवैकवेद्यं श्रुतिसारभूतं सद्वस्तु-

ब्रह्माखण्डात्मापरपर्यायमेकं सद्भावमाश्रित्य नामरूपात्मकमिदं जगत्प्रवृत्तमिति द्योतनाय **सत्प्रत्यया** इति बहुवचनं **सन्त**मित्येकवचनं च प्रयुक्ते । सद्भाव एकस्मिन्नेव सति भावाभासानामनेकत्वात् प्रत्ययानामप्यनेकत्वम् ।

दृश्यस्य वस्त्वाभासत्वेऽप्यस्तित्वप्रतीतिः सद्भावाश्रयणादिति स्पष्टमुक्तं भवति । सद्भावस्य सर्वाश्रयत्वात् सर्वस्यान्तर्बहिश्च अस्तित्वेन ग्रहणाच्च सर्वगतत्वं सिद्धम् ।

एवं सद्भावस्य ब्रह्मणः सद्रूपतया सर्वदेशव्यापकत्वेऽपि हृदयं मुख्यं स्थानमुपपादयति । **हृद्येष चिन्तारहितो हृदाख्य** इति ।

**एष** सन् सर्वगतो भावः **हृदि** हृत्पुण्डरीके दहराख्ये **चिन्तारहितः** चिन्तया अन्तःकरणप्रवृत्त्या रहितः शून्यः । **हृदाख्यः** हृत् हृदयं आख्या नाम यस्य सः भातीति वाक्यशेषः ।

कथं पुनरस्य सद्भावाख्यस्य ब्रह्मणः सर्वगतत्वे सिद्धे हृद्देशवर्तित्वमुक्तम् ? सति ब्रह्मणि सर्वगतेऽपि तस्य प्रत्येकं जीवराशौ स्वात्मरूपतया भानं विवक्षितम् । सर्वस्यापि स्वात्मैव मुख्यो भवति । अहंप्रत्ययस्याश्रयभूते स्वात्मनि ब्रह्मसाक्षात्कारस्य सौलभ्यात् ब्रह्मणः सर्वभावात्मकत्वे सिद्धेऽपि स्वात्मरूपत्वमुपदिष्टम् । सर्वस्यापि स्वात्माऽयमहमस्मीत्यनुभवगम्यो भवति । यत्र तादृशोऽनुभवस्तद् हृदयशब्दवाच्यं भवति । तस्मादेष इति पदेनात्माऽभिहितः । सूर्यरश्मीनां सर्वव्यापकत्वेऽपि सूर्यकान्तशिलायां पुञ्जीभावात् प्रतापघनत्वं दृश्यते ।

एवं ब्रह्मणः सर्वगतत्वेऽपि हृदये चिद्घनत्वमयमहमस्मीत्यात्म-रूपेण भानमवगन्तव्यम् । तद्भूमिकायामावेदितम् ।

हृद्येष इति प्रयोगेण हृदि स्थाने, एषः अयमात्मा इति हृदयपदस्य निर्वचनमपि गम्यते । देशावच्छिन्नबुद्धिग्राह्यस्य शारीरस्य हृद्देशस्य आत्माधिकरणत्वे प्रतिपादिते हृदयात्मनो-राधाराधेयभावापत्तिशङ्कानिरासार्थं अधिष्ठात्रधिष्ठानयोरात्महृदय-योश्चिन्मयत्वाभेदेनाध्यवसायमाह हृदाख्य इति । हृदयमेव भवति स आत्मेत्यर्थः । तस्मात् सर्वस्याप्यात्मा हृदि भाति हृदयं च भवतीति सिद्धम् । नैतन्मात्रम् । समष्टिदृष्टावपि सर्वात्मभूतत्वात् ब्रह्मैव हृदयं भवतीति द्रष्टव्यम् । सर्वस्यापि सारभूतं सद्रूपं रहस्यं ब्रह्म हृदयपदवाच्यं भवति । अपिचाहं-प्रत्ययाश्रयत्वेनात्मैव सर्वस्यापि दृग्दृश्यव्यवहारस्य मूलभूतो हृत्पद-वाच्यो भवतीत्यात्मविदामभिमतम् । अहंप्रत्ययश्च सर्वेषां प्रत्ययानां मूलम् । उक्तं च,

"अहंवृत्तिः समस्तानां वृत्तीनां मूलमुच्यते" इति ।

सर्वासां वृत्तीनां हृदयमूलत्वेन तस्यात्मनो मनोमयत्वविकारा-पत्तेर्विनष्टिशङ्का न कार्येत्याह चिन्तारहित इति । अत्र चिन्तापदं मनोमयत्वपरम् । मनसश्चिन्तापरपर्यायसङ्कल्परूप-त्वात् । तद्राहित्यं च मनोमूलस्यास्मीत्यविशेषानुभवस्वरूपस्य क्षणिकाभिर्वृत्तिभिरसम्पर्कात् । एवं च हृदाख्यस्यात्मनो वैभवा-न्मनोमयत्वेऽपि मूले चिन्ताराहित्यान्नित्यत्वमनपोद्यम् ।

अस्यात्मनो मनोमूलत्वेऽपि मानसागोचरत्वमाह, **कथं स्मरामस्तममेयमेकम् ?** इति। मनसोऽपि सूक्ष्मतरत्वादमेयं, मन्तुं न शक्यस्तं। प्रथमं विषयवृत्त्यात्मकबाह्याभ्यन्तरभेदवतोऽस्य जगतः सर्वस्यास्तित्वेनोपलब्धेराश्रयभूतं केवलसत्प्रत्ययगोचरं सद्भावाख्यमेकं ब्रह्म प्रतिपाद्यानन्तरं तस्य सर्वेष्वपि भूतेष्वात्मरूपेण भानाद्धृद्गतत्वं हृत्पदवाच्यत्वं च निर्दिष्टे। एकस्यैव ब्रह्मणो नानाभूतेष्वात्मरूपेण भानान्नानात्मशङ्का मा भूदित्येकमिति स्पष्टं विशेषणम्।

**कथं स्मरामस्तं?** विषयविषयिभावातीतत्वात् स्मर्तुं न शक्यत इति भावः। यद्येवं, कथं तर्हि स आत्मा स्मार्यो ध्येयो वा भवतीति जिज्ञासायां, **तस्य स्मृतिस्तत्र दृढैव निष्ठे**त्याह।

**तत्र** तस्मिन्नुक्तप्रकारे अहमस्मीति निरालम्बानुभवस्वभावे स्वात्मनि **दृढा निष्ठैव** निरन्तरा स्थितिरेव **तस्य स्मृतिः** तस्यात्मनः स्मरणं भवतीत्यर्थः।

अत्रेदमनुसन्धेयम्। यथा बहिस्सर्वेषां भावानां सद्भावो मूलाश्रयो भवति, यथा चान्तः सर्वासां वृत्तीनां अहंवृत्तिर्मूलवृत्तिर्भवति, तथा बहिरन्तर्वा सर्वेषामनुभवानां अहमस्मीति सहजसिद्ध आत्मनोऽनुभवो मूलानुभवस्सन् तदुद्भूताभिर्मनोवृत्तिभिर्न गृह्यते। अतः सर्वासां वृत्तीनामहंवृत्तावुपसंहारे कृते अहं वृत्तेरुदयस्याश्रयभूतः स्वात्मानुभवः सिद्धो भवति।

एवंभूतोऽयमात्मा हृदि भातीति विज्ञानवृत्त्या गृहीत्वा, तां वृत्तिं अविच्छिन्नधाराकारत्वेनानुसन्धाय आत्मस्वरूपवृत्तेर्दृढीकरणात् या स्थितिः सिध्यति सैव तस्य ब्रह्मात्मनः स्मृतिरुपासनं भवति। इदमेव हार्दोपासनम्। एवं मनआदिसाधननिरपेक्षं अतीन्द्रियमपरोक्षानुभवैकवेद्यं लोके सर्वस्य हृद्भूतं हृद्यात्मरूपेण भासमानं परं ब्रह्म प्रतिपाद्य, तदुपासनविधा स्मृतिरूपा ब्रह्मात्मैक्यनिष्ठा प्रतिपादिता।

अत्र श्लोके सर्वत्र लक्ष्यभूतसद्भावस्वरूपान्वेषण-प्ररोचनार्थः प्रश्नः प्रथमेन पादेन, सत्प्रत्ययगोचरस्स हृदये सन्नहमिति भातीति द्वितीयेनोत्तरं। एवं तृतीयेन पादेन कथं तस्यामेयस्योपास्यत्वमिति प्रश्नः हृदयनिष्ठयेत्यन्त्येनोत्तरम्। एवं प्रश्नोत्तरस्वारस्यमवधेयम्।

ग्रन्थारम्भे सत्पदश्रवणं स्मरणीयं भवति, श्रवणीयश्चेहाद्यश्लोकार्थविचारे भगवतः श्रीरमणस्य महर्षेरेष हार्दोपदेशः।

"हृदयकुहरमध्ये केवलं ब्रह्ममात्रं
ह्यहमहमिति साक्षादात्मरूपेण भाति।
हृदि विश मनसा स्वं चिन्वता मज्जता वा
पवनचलनरोधादात्मनिष्ठो भव त्वम्॥"

(अवतारिका) एवं स्वानुभवसिद्धां सहजात्मनिष्ठां ज्ञानमार्गेणोपदिश्य भक्तिमार्गेण पूर्णां प्रपत्तिमुपदिशति। मृत्युञ्जयमिति॥

**मृत्युञ्जयं मृत्युभिया श्रितानां-**
**महंमतिर्मृत्युमुपैति पूर्वम् ।**
**अथ स्वभावादमृतेषु तेषु**
**कथं पुनर्मृत्युधियोऽवकाशः ॥ २ ॥**

(भा)—**मृत्युभिया** मृत्योर्मरणाद् भिया भयेन प्रेरणरूपाद्धेतोः **मृत्युञ्जय**ममरणधर्माणं सर्वेश्वरं, **श्रितानां** शरण्यत्वेन प्रपन्नानां **अहंमति**रहमिदं शरीरं ममेदं शरीरं अहं पृथगस्मि सर्वेभ्यो भूतेभ्यश्चेति या धीस्साऽहंमतिः **पूर्वं मृत्युमुपैति** प्रथमं नाशं गच्छति । **अथ** शरणागतेरनन्तरं फलितां स्थितिं द्योतयितुमथेति प्रयोगः । आत्मस्वरूपेण हृदये विभान्तं सर्वेश्वरं शरणं गतानां पुण्यपुरुषाणां ईश्वरादनन्यभावोपगमात्तेषां जननमरणवर्जितेनेश्वरेणामृतत्वरूपसाधर्म्ये सिद्धे ते **स्वभावादमृता** उच्यन्ते । **तेषु** हृदयस्थेषु **अमृतेषु मृत्युधियो** मरणचिन्तनस्य **कथं पुनरवकाशः?** नास्तीत्यर्थः । अमृतं सर्वेश्वरमाश्रितानां पुरुषाणां मरणभयकारणभूता शरीरात्माभिमानिनी ग्रन्थिरूपिण्यहंमतिर्नष्टा भवति । अहंमतौ विनष्टायां तदायत्तस्य सर्वस्यापि सङ्गस्य प्रणाशे जाते अमृतात्मस्वरूपेण विराजमानान्पुरुषान् कथं मृत्युधीः स्पृशति?

अत्रेदं द्रष्टव्यम् । प्रथमश्लोकोक्तसहजात्मनिष्ठावतामेवेदृशी पूर्णा प्रपत्तिः साध्या भवति । निमित्तभूतमरणभयप्रेरितमात्मा-

न्वेषणं हृदि साक्षादात्मरूपेण विलसति ब्रह्मणि सर्वेश्वरे सर्व-भारसमर्पणरूपायां प्रपत्तौ पर्यवस्यतीति भगवतो महर्षेः स्वानु-भवदृष्टमिदं तत्त्वम् ।

एवं ब्रह्मात्मैक्यसाक्षात्काररूपं निष्ठाप्रपत्त्योः समानं फलम् । जिज्ञासोर्भक्तस्य वा सत्त्वपरिपाकवशान्निष्ठाप्रपत्ती अधिकृत्य सत्यपि दृष्टिभेदे निष्ठावत एव प्रपत्तिः पूर्णा भवति । प्रपन्नस्यैव निष्ठा सिद्धा भवतीति यथार्थभक्तिज्ञानयोरविरोधं पश्यति भगवान्महर्षिः ।

एवं परमपुरुषार्थसाधनभूतमार्गद्वयप्रतिपादकेऽत्रश्लोकद्वये नि-ष्कलसकलात्मकस्य परस्य ब्रह्मणः संस्मरणाच्छिष्टाचारानुसारेण मङ्गळमनुष्ठितं भवति । एकमेव सद्वस्तु परं ब्रह्म सकलं निष्कलमित्युभयथाऽस्मदादिभिर्गृहीतुं शक्यत इत्यालोक्य प्रथमे श्लोके निष्कलं ब्रह्म निष्ठाश्रयत्वेन प्रतिपादितम् । द्वितीये श्लोके सकलं ब्रह्म शरण्यत्वेन स्तुतम् ।

(अ)—ब्रह्मणः शरण्यत्वेनानुग्राहकत्वसिद्धे र्जगज्जीवेश्व-राख्यतत्त्वत्रयवादस्याभ्युपगम्यत्वादत्यन्तभेदापत्तिर्न शङ्कितव्ये-त्याह । सर्वैर्निदानमिति ।

**सर्वैर्निदानं जगतोऽहमश्च**
**वाच्यः प्रभुः कश्चिदपारशक्तिः ।**
**चित्रेऽत्र लोक्यं च विलोकिता च**
**पटः प्रकाशोऽप्ययंभवत्स एकः ॥ ३ ॥**

(भा)—मङ्गलश्लोकौ व्याख्यातौ । अयं शास्त्रस्यादिमः श्लोकः । **जगतो** लोकस्य **अहमः** अहमिति वृत्तिरूपस्य जीवस्यास्मदादेः **निदानं** कारणं **अपारशक्तिः** अपारा अनवधिका शक्तिः सामर्थ्यरूपा यस्य स **कश्चित्प्रभुः** कोऽपि नाथः ईश्वर इत्यर्थः **सर्वै**र्नानाविधसिद्धान्तवादिभिः **वाच्यः** अङ्गीकार्यः । बहिरिदं जगत् प्रत्यक्षदृष्टं तत्त्वं । अन्तरहमिति प्रमाणान्तरनिरपेक्षं अनुभवसिद्धं जीवाख्यं तत्त्वम् । अनयोरुभयोर्मूलमीश्वराख्यं तत्त्वं यस्यापारशक्तेर्जगज्जीवनियामकत्वं सिद्ध्यति । तत्त्वत्रयाभ्युपगमेऽद्वैतहानिर्न मन्तव्येति चित्रदृष्टान्तेनाह ।

**अत्र** सृष्टिरूपे नामरूपात्मके **चित्रे** जगति चित्रत्वमारोपितं, **लोक्यं** जगच्चित्रस्थानीयं दृश्यं, **विलोकिता** द्रष्टा, **पटः** जगद्रूपस्य चित्रस्याधिकरणं, **प्रकाशो** जगद्रूपचित्रदर्शनस्य साधनं येन विना द्रष्टृदृश्ययोः सतोरपि दर्शनं न भवति । इदं सर्वं **स एक एवाभवत्**। एकस्यैव ब्रह्माख्यस्य सद्भावस्यानवधिकशक्तिमत्त्वात् अधिभूताध्यात्माधिकरणादिप्रकारभेदः प्रत्यपादि । तस्मादुपादानं निमित्तं च दृग्दृश्यव्यवहारविषयस्यास्य सर्वस्य जगतो जीवस्य च ब्रह्मैवेत्युक्तं भवति । "सर्वं खल्विदं ब्रह्म" "अनेन जीवेनात्मना नामरूपे व्याकरवाणी" त्यादिवाक्यानां विषयोऽत्र द्रष्टव्यः ।

(अ)—यद्येकमेव सद्वस्तु परं ब्रह्म सर्वशक्तत्वाज्जगज्जीवेश्वरात्मकं भवति, कथं तर्हि परमार्थस्वरूपमेकमेवेति नावगम्यत इत्याह आरभ्यत इति।

**आरभ्यते जीवजगत्परात्म-**
**तत्त्वाभिधानेन मतं समस्तम्।**
**इदं त्रयं यावदहंमति स्यात्**
**सर्वोत्तमाऽहंमतिशून्यनिष्ठा ॥ ४ ॥**

(भा)—**समस्तं मतं** सर्वेऽपि शास्त्रीयाः सिद्धान्ताः द्वैतादय इत्यर्थः। **जीवजगत्परात्मतत्त्वाभिधानेन** जीवोऽहंपदार्थः जगदिदं सर्वं पर आत्मा ईश्वर इति तत्त्वानां अभिधानेन आख्यानेन, **आरभ्यते** उपक्रम्यते। अद्वैतिनामप्यभिमतं हि जगदादितत्त्वत्रयम्। प्रारभ्यत इत्युक्तेर्मतस्य तत्त्वत्रये प्रारम्भः न तु तत्र पर्यवसानमित्यर्थः। यद्येकमेव परमार्थतत्त्वं, कथं तर्हि तस्य तत्त्वत्रयरूपमवगम्यते? अहंमतिसापेक्षं तदिति प्राह **इदं त्रयं यावदहंमति स्यादिति**। इदं तत्त्वत्रयं जगज्जीवेश्वराख्यं **यावदहंमति** यावत्यहंमतिः **स्याद्** भवेत्। यावत्कालमहंधीस्तावत्कालं तत्त्वत्रयग्रहणं भवतीत्यर्थः। **अहंमतिशून्यनिष्ठा** अहंमत्याऽहंधिया शून्या रहिता निष्ठा स्थितिः **सर्वोत्तमा** सर्वासां निष्ठानां उत्तमोत्कृष्टा भवतीति वाक्यशेषः।

सत्त्वेऽपि बह्वीनां निष्ठानां निगमागमोपदिष्टानां एषाऽध्यात्मनिष्ठा परमोत्कृष्टा भवति। यत्राहंमतेरेव विलयेन जगज्जीवेश्वरभेदव्यवहारस्य मूलभूतो ब्रह्माख्यः सद्भावः साक्षादनुभूयत इत्यर्थः। तस्मादीदृशी भवत्यहंधीः यया परमेकं ब्रह्माभेदस्वरूपं तत्त्वत्रयमूलकबहुभेदात्मकत्वेन दृश्यते। परमार्थतत्त्वग्रहणप्रतिबन्धिकेयं ग्रन्थिरूपिण्यहंधीरन्यत्र विस्तरेण व्याख्यायते।

(अ)—असत्यामहंधियां जगज्जीवेश्वराणां पृथग्भावस्यानुपलभ्यत्वात् किमिदं सर्वं जगदसत्यं उत सत्यमित्यादिशङ्कानिवारणार्थं प्रवृत्तानां नानाशास्त्रीयसिद्धान्तवादानां परमार्थतत्त्वग्रहणे साक्षादुपयोगित्वं नास्तीत्याह। **सत्यं मृषावेति।**

**सत्यं मृषा वा चिदिदं जडं वा**
**दुःखं सुखं वेति मुधा विवादः।**
**अदृष्टलोका निरहंप्रतीति-**
**र्निष्ठाऽविकल्पा परमाखिलेष्टा ॥ ५ ॥**

(भा)—इदं जगत् **सत्यं मृषा वा,** किं सत्यमुत मिथ्या? किमिदं **चित्** चेतनं **जडं** वोताचेतनं? किमिदं जगत् **सुखं दुःखं वा,** एवमादिर्विवादोऽविद्यायामन्तरे वर्तमानानां पण्डितंमन्यानां विविधो वादः **मुधैव** विफल एव, न साक्षात्कारोपयोगीत्यर्थः। निष्ठैव संशयच्छेदिनी सर्वेषां वादानां तिरस्कर्त्री चेत्युत्तरार्धेनाह।

**अदृष्टलोका** न दृष्टो लोको यत्र सा, यस्यां निष्ठायां लोको भिन्नतया न विषयो भवति सेत्यर्थः । **निरहंप्रतीतिः** निर्गता अहंप्रतीतिर्यस्यास्सा, **अविकल्पा** अविद्यमानो विकल्पो यस्याः सा । किमिदं सत् उत न? किमिदं चित् उत न? किमिद-मानन्दमुत ने? त्यादि विकल्पशून्या निष्ठा **परमा** उत्कृष्टा, **अखि-लेष्टा** अखिलानां द्वैतादिमतानुसारिणामिष्टा संमता भवतीति वाक्यसम्बन्धः । अत्यन्तविरुद्धसिद्धान्तानुसारिभिः द्वैताद्वैतादि-वादिभिः सर्वैरप्यास्तिकैः भक्तिज्ञानयोगाद्यन्यतममार्गस्य परम-पुरुषार्थसिद्धिं प्रत्यावश्यकत्वमभ्युपगम्य तत्तन्मतानुरोधेनोपदिष्टासु निष्ठासु विषयचिन्तनस्याहंभावस्य वा नास्त्यवकाशः । सर्वासु निष्ठासु लक्ष्यस्यैकाग्रधिया हि ध्येयत्वमुपदिश्यते । तस्मात्सत्या-सत्य-चिदचित् -सुखासुख-एकानेकादि-विकल्पविवर्जिताऽध्यात्म-निष्ठा सर्वेषां सम्मतेत्युक्तम् ।

अत्र सत्यं मृषा वेति त्रिधा विकल्पोत्थापनेन परमार्थसत्यं सदेव न मृषा, चिदेव न जडं, सुखमानन्दमेव न दुःखमिति सच्चि-दानन्दस्वरूपं निष्ठयानुभवैकवेद्यं न विवादविषयो भवितुमर्हतीति गूढाभिप्रायो लक्ष्यः । अत्र न मृषा न जडं न दुःखमिति तत्त्वप्रतिपादनस्यान्तर्भावात् सांख्य - सौगत - शून्यवादिसमयेषु भगवतो महर्षेरसम्मति र्द्रष्टव्या ।

(अ)—अथ जगज्जीवेश्वराणामखण्डात्मन्यैक्यात् तत्र दृग्दृश्य भेदाभावात्तस्यानन्तदृष्टिस्वरूपत्वमुपपादयति । **सरूपबुद्धिरिति** ।

**सरूपबुद्धिर्जगतीश्वरे च**
**सरूपधी रात्मनि यावदस्ति ।**
**अरूप आत्मा यदि कः प्रपश्येत्**
**सा दृष्टिरेकाऽनवधिर्हि पूर्णा ॥ ६ ॥**

(भा)—**यावदात्मनि** स्थूलसूक्ष्माद्यन्यतमशरीरावच्छिन्ने द्रष्टरि, शारीरपरमत्रात्मपदं, **सरूपधीः** सरूपः रूपेण सह वर्तत इति सरूपः, सरूप आत्मा इति धीर्मतिरस्ति तावज्जगति **ईश्वरे च सरूपबुद्धि** जगत्सरूपं, ईश्वरः सरूप इति बुद्धिर्भवत्येव । अत्र रूपमन्नप्राणादिकोशान्यतमपरं शरीरं, न केवलं चक्षुर्ग्राह्यस्थूल-देहमात्रपरमित्यवगन्तव्यम् । पञ्चकोशात्मकं देहमित्युत्तरत्र वक्ष्य-माणत्वात् । अनेन जगतो जीवस्येश्वरस्य च सरूपत्वमरूपत्व-मुभयमप्यभ्युपगम्य, तेषामरूपत्वेऽखण्डात्मन्यैक्यमुत्तरार्धेनाह । **यद्यात्मा अरूपो** रूपवर्जितः अशरीरः तर्हि **कः प्रपश्येत्** को वा द्रष्टा भवति ? "यस्मिन् सर्वाणि भूतान्यात्मैवा भूद्विजानतः" इत्युक्तदिशा सर्वस्मिन्नात्मभूते सति सर्वभूतात्मभूतस्यात्मनोऽन्यत्वेन दृश्यस्य द्रष्टव्यस्य वाऽभावादेक एवारूपः सर्वाणि रूपाणि ग्रसित्वा लसति । तत्र दृग्दृश्यव्यवहारस्यानवकाशात् तत्केन कं पश्येदित्यादिवाक्यैः अद्वैतमखण्डमात्मानमाह श्रुतिः । अत्रापि "सा दृष्टिरेकाऽनवधिर्हि पूर्णा" इत्याह । कः प्रपश्येदित्याक्षेपेण

नास्ति द्रष्टेति सिद्ध्यति। तत्र हेतुमाह। हि कुत इति हेतु माह। **सा** तच्छब्दवाच्या **दृष्टिश्चित्स्वरूपिणी एकाऽद्वितीयाऽ**-खण्डेत्यर्थः। अन**वधिरनन्ता पूर्णा** सर्वत्रेत्यर्थः। द्रष्टेत्युक्ते द्रष्टु-रन्यत्वेन दृश्यस्यास्तित्वशङ्कानिरासाय दृष्टिरित्युक्तम्। आत्मन-श्चित्स्वरूपत्वं लक्षयितुं दृष्टिरित्याह। न तु द्रष्टारमात्मानमन्तरा दृष्टिः पृथग्भवतीति विवक्षया।

पारावारात्तरङ्गपटलेष्विव परस्माद्ब्रह्मणोऽनेककोटिब्रह्माण्डेष्व-नवरतं जन्मस्थितिभङ्गं प्राप्नुवत्सु, तथा जायमानानां एकै-कस्यापि ब्रह्माण्डस्य पिण्डाण्डस्य वा दृग्दृश्याधाराधेयजगदीश्व-रादिभेदव्यवहारयोगे सिद्धेऽपि, अखण्डस्यात्मनः स्वरूपं दृष्टिपदवाच्यं नित्यं पूर्णमविकार्येव भातीत्युक्तं भवति।

अत्र पूर्वार्धेन जगदीशयोः सरूपत्वं जीवस्यात्मनः स-रूपत्वायत्तमित्युक्त्वोत्तरार्धेन तस्यात्मनोऽरूपत्वसिद्धावनवधिका-खण्डदृष्टिस्वरूप आत्मैक एव नित्यसिद्धो ग्राह्यो भवतीति प्रति-पादनात् द्रष्टुरात्मनोऽरूपत्वमेव परमार्थतत्त्वमिति स्पष्टः सिद्धान्तः। तथापि द्रष्टुर्विषयिणः सरूपत्वं जगदीशयोः स-रूपत्वग्राहकमित्युक्तम्।

कथं तर्हीदं अनित्यमपि तात्कालिकं सरूपत्वमात्मनः सम्भवतीत्यन्यत्र विचारितम्।

(अ)---द्रष्टुरात्मनः सशरीरत्वप्रसङ्गात् शरीरं पञ्चकोशात्मकं शरीरात्मबुद्ध्यैव भुवनज्ञानमित्याह। यत्पञ्चकोशात्मकमिति।

**यत्पञ्चकोशात्मकमस्ति देहं**
**तदन्तरा किं भुवनं चकास्ति?**
**देहं विना पञ्चविधं तदेतत्**
**पश्यन्ति के वा भुवनं? भणन्तु ॥**

(भा)—**पञ्चकोशात्मकं** अन्नमय-प्राणमय-मनोमय-विज्ञान-मयानन्दमयाः पञ्चकोशाः आत्मा रूपं यस्य तत्। **यद्देहमस्ति, तदन्तरा** तद्देहमन्तरेण **भुवनं चकास्ति किं?** जगदस्तीत्यनुभव एव नास्तीत्यर्थः। देहाधीनं जगद्ग्रहणमिति भावः। **तत्**तस्माज्जगद्ग्रहणस्य देहायत्तत्वात् हेतोः **एतत्पञ्चविधं** अन्नमयादिपञ्चभेदवद्देहं शरीरं **विना के वा भुवनं पश्यन्ति, भणन्तु**। शरीरं विना न केऽपि भुवनं गृह्णन्तीति विदितमेतत् सर्वेषामिति भणितम्। तस्मादिह शास्त्रे यत्र शरीरपदं प्रयुक्तं तत्रान्नमयादिपञ्चकोशान्यतमं शरीरं ग्राह्यम्। न तु केवल-मन्नमयमिदं स्थूलं शरीरमिति ज्ञेयम्।

शरीरभुवनयो र्व्यष्टिसमष्ट्यो रंशांशिभावादंशस्यांश्यधीन-त्वाच्छरीरे भुवनाधीने सति शरीरबद्धस्य विषयिणः शरी-रात्माभिमानवतः शरीरबन्धमन्तरा विषयित्वमेव न सिद्ध्यति। असति शरीरबन्धे विषयित्वस्यासिद्धेः कस्य गोचरः स्याद्भुवना-कारो विषयः?

(अ)—मानवव्यक्तौ द्रष्टुर्विषयिणः मनोमयत्वात्तस्य विषयभूतं भुवनमपि मनोमयं भवतीति वृत्तिविषयतादात्म्यं प्रतिपादयितुं भुवनस्य मनोमयत्वमाह, **शब्दादिरूपमिति** ।

**शब्दादिरूपं भुवनं समस्तं**
**शब्दादिसत्तेन्द्रियवृत्तिभास्या ।**
**सत्तेन्द्रियाणां मनसो वशे स्या-**
**न्मनोमयं तद्भुवनं वदामः ॥**

(आ)—**समस्तं भुवनं** सर्वमिदं जगत् **शब्दादिरूपं** शब्दादयः शब्दस्पर्शरूपरसगन्धाः रूपं स्वरूपं यस्य तत् । अस्मदादिभिर्गृह्यमाणस्य जगतः शब्दादिगुणसमुदाय एव स्वरूपं भवतीत्यर्थः । **शब्दादिसत्ता** शब्दादीनां गुणानां सत्ता स्थिति**रिन्द्रियवृत्तिभास्या** श्रोत्रादीन्द्रियाणां वृत्तिभिर्व्यापारैर्भास्या प्रकाश्या भवति । शब्दादिगुणान्प्रति श्रोत्रादीनां भासकत्वोक्तेस्तेषां ग्रहणस्येन्द्रियाधीनत्वमुक्तम् । **इन्द्रियाणां** श्रोत्रादीनां **सत्ता** सद्भावो **मनसो वशे स्या**दिन्द्रियाणामपि मनोऽधीनत्वमुक्तम् । **तत्** तस्मात् भुवनस्य शब्दादिगुणसमुदायरूपत्वात् शब्दादिगुणानामपीन्द्रियनिघ्नत्वात् इन्द्रियाणामपि मनोमूलत्वात् हेतोः **भुवनं** जगत् उद्देश्यं **मनोमयं** विधेयं मनसो विकारं **वदामः** ।

अत्र सूक्ष्मस्य मनसः स्थूलरूपं जगदिति प्रतिपादितम् । स्थूलसूक्ष्मयो रवस्थाभेदसिद्धयो र्जगन्मनसो स्तादात्म्यसम्बन्धो ग्राह्यः । एकस्मादेव कारणभूताद्वस्तुनोऽनयोर्जन्मादिसिद्धेः । तदुत्तरश्लोके प्रतिपादयति ।

व्यष्टिगतं समष्टिगतं च मनस्तत्त्वमुद्दिश्य मनोमयं भुवनमित्युक्तम् । व्यष्टेर्देवदत्तस्य मनसि नष्टे तस्य मानसं भुवनं नष्टं भवति, न तु यज्ञदत्तस्य समष्टिभूतेश्वरस्य वा ।

अव्यक्तान्महन्महतोऽहङ्कारस्तस्मात् पञ्चतन्मात्राणि तेभ्य इदं जगदित्यवस्थाभेदबहुलं सङ्कोचविकासक्रमं पूर्वैरुक्तं इह स्मारयामः ।

(अ)—लोकस्य धिया सहाविनाभावे सत्यपि धियो भासकत्वमाह **धियेति** ।

**धिया सहोदेति धियाऽस्तमेति**
**लोकस्ततो धीप्रविभास्य एषः ।**
**धीलोकजन्मक्षयधाम पूर्णं**
**सद्वस्तु जन्मक्षयशून्यमेकम् ॥९॥**

(भा)—**लोकः** जगत् **धिया सह** सर्वासां मनोवृत्तीनां मूलवृत्त्याऽहंधिया **सहोदेत्युद्गच्छति** । **धिया** सहाहंधिया वृत्तिरूपया सहास्तमेति अदर्शनं गच्छति । ततः तस्मादेष लोकः ‘इदं

जगत्' इति व्यवहारसिद्धः **धीप्रविभास्यः** अहंमूलकधीवृत्त्यैव प्रकाश्यो भवतीति सिद्धान्तीकुर्मः ।

विषयिभूतधियश्चिद्रूपत्वाद्भासकत्वं विषयभूतलोकस्य भास्यत्वं च स्पष्टं भवति । सर्वस्यापि जगतो मनोमयत्वनिरूपणेन सूक्ष्मरूपधीवृत्तेः स्थूलाकारत्वेन जगतः प्रतिपादनाद्धीवृत्तौ स्वमूले आश्रये उपसंहृतायां वृत्तिविषयावान्तरबाह्यौ धीलोकौ तुल्योदयास्तमयौ सदेकमूलावेव भवत इत्युत्तरार्धेन द्रढयति । **धीलोकजन्मक्षयधाम,** धियोऽहंधियो लोकस्य जगतः जन्मन उत्पत्तेः क्षयस्य विलयस्य च धाम मूलं स्थानं पूर्ण मभिन्न मबाधितत्वात् सूक्ष्मस्थूलभेदभावाभ्यां धीलोकाभ्याम् । **जन्मक्षयशून्यं** जन्मना क्षयेण च शून्यं वर्जितं **सद्वस्तु,** उत्पत्तिप्रलयवतोर्धीलोकयोः कारणसामग्रीत्वेन प्रतिपादितं स्वयमुत्पत्तिप्रलयविवर्जितमेकं जगज्जीवाद्यनेकाकारव्यवहारस्य मूलत्वेऽप्येकमेव भवतीति वाक्यशेषः ।

ग्रन्थारम्भे निष्कलब्रह्माख्यसद्भावस्मरणद्वारा सहजात्मनिष्ठामुपपाद्यानन्तरं सकलब्रह्माख्यस्य सर्वेश्वरस्य शरण्यत्वेनोपपादनाय सम्पूर्णात्मसमर्पणरूपायां प्रपत्तावुपदिष्टायां, एकस्यैव ब्रह्मणः सकलनिष्कलभेदेनास्मदादेर्ग्रहणक्षमत्वाद्द्विधा मङ्गलमाचरितम् ।

वस्तुतस्त्वेक एव सन् पुरुषो जगदाद्याकारो भवतीति दृढीकरणाय स एवापारशक्तिः सर्वकारणसामग्रीति **सर्वैर्निदान**मिति श्लोकेन सिद्धान्तमुक्त्वा जगज्जीवेश्वराख्यतत्त्वत्रयस्य पारमार्थिकत्वशङ्कानिवारणाय सर्वस्यापि समयस्य प्रारम्भस्तत्त्वत्रये

पर्यवसानं तु सन्मूले सद्वस्तुनीति निष्कलत्वं स्मारितं आरभ्यत इति श्लोकेन ।

निरहंभावनिष्ठयैव तत्त्वसिद्धिर्न तत्त्वविचारणाय प्रवृत्तैर्नानासिद्धान्तवादैरिति पक्कधियं जिज्ञासुमात्मोन्मुखीकर्तुं निर्विकल्पनिष्ठां **सत्यं मृषा वेति** श्लोकेन स्मारयित्वा, सरूपधीरिति श्लोकेन प्रमाणान्तरनिरपेक्षं अस्मदादेरनुभवसिद्धस्याहमाख्यस्य जीवस्य सरूपत्वादेव जगत ईशस्य च सरूपत्वमित्यभिधाय, गृहीतुर्जीवस्य प्रारम्भो रूपग्रहणे पर्यवसानं तु सर्वस्वरूपातीते निरवधिके स्वरूपभूते निष्कले सद्वस्तुन्येवेति सिद्धान्तितम् । एवं सर्वत्र सकलत्वप्रसङ्गे निष्कलत्वं विस्मृतं माभूत् सकलत्वं तु व्यवहारसिद्धत्वादस्तित्वेनाभ्युपगम्यमेवेति सकलनिष्कलपक्षयो र्विरोधस्तु तर्कयुक्तिमदोन्मत्तबुद्धिगत एव, न वस्तुगत इति च तत्र तत्र स्मारयन्नेव प्रवृत्तमिदं शास्त्रमवगन्तव्यम् ।

एवमेव **यत्पञ्चकोशात्मकं शब्दादिरूपं धिया सहोदेति** इति त्रिभिः श्लोकै स्समष्टिव्यष्ट्योरभेदं तत्त्वतो निश्चित्य व्यष्टेर्जीवस्य पञ्चकोशात्मकं शरीरमेव जगद्भवति, समष्टेरीशस्य पञ्चकोशात्मकं जगदेवशरीरं भवतीति च गमयित्वा, पञ्चकोशान्यतमस्य मनोमयस्य स्वरूपं विचार्य जगतो मनोमयत्वप्रतिपादनद्वारा मनोमूलाहंधीभास्य-लोकस्याहंधिया मुपसंहारः, अहंधियश्च सद्वस्तुनीति प्रतिपादनेन सद्वस्त्वेवाहंधीरूपद्वारा मनोमयात्मकभुवनाकारतां गतमिति स्पष्टीकृतवान् ।

(अ)—अथोक्तलक्षणे सद्वस्तुनि तादात्म्यनिष्ठैव सद्दर्शनमित्याह भवन्त्विति ।

**भवन्तु सद्दर्शनसाधनानि**
**परस्य नामाकृतिभिः सपर्याः ।**
**सद्वस्तुनि प्राप्ततदात्मभावा**
**निष्ठैव सद्दर्शनमित्यवेहि ॥ १० ॥**

(भा)—**नामाकृतिभिः** नामभिरनन्तैः शिवविष्णुब्रह्मेन्द्रादिनामभिः आकृतिभिः हिरण्मयादिमूर्तिभिः पृथिव्यप्तेजोवाय्वाकाशसूर्यचन्द्रयजमानाख्याभिरष्टाभिर्मूर्तिभिर्वा **परस्येशस्य सपर्याः** क्रियमाणाः पूजाः **सद्दर्शनसाधनानि** सतः पुरुषस्य सर्वेश्वरस्य (कर्मणि षष्ठी) दर्शने साक्षात्कारे साधनानि सहकारीणि **भवन्तु** सन्तुनाम । जीवकल्पितवृषवाहन-गरुडवाहनादि-मूर्तिभि रीशकल्पिताग्निवाय्वादित्यादिमूर्तिभिर्वा सर्वाधिष्ठातृचैतन्यस्य सर्वेश्वरस्योपासनं फलप्रदमेव । फलं चोपासकश्रद्धानुरूपं उपास्यमानस्येश्वरस्यानुग्रहाधीनम् । श्रद्धामयस्योपासकपुरुषस्योपास्यमूर्तिनिरपेक्षं मूर्त्यभिमानिनी देवता फलं विधत्ते । तस्माद्ब्रह्मात्मसाक्षात्कारस्य नामसङ्कीर्तनानि मूर्तिपूजनानि च उपयोगीन्येव । निष्ठैव साक्षात्कार इत्याह । **सद्वस्तुनि** सर्वासामुपास्यमानमूर्तीनामाश्रयभूते सद्भावाख्ये ब्रह्मणि, **प्राप्ततदात्मभावा**, प्राप्तः लब्धः

स एवात्माहमिति भावः यस्यां सा । उपास्यमूर्तेराश्रयो यः स एवाहंप्रत्ययस्याश्रय इति तादात्म्यसिद्धिर्यस्यां निष्ठायां, सैव **निष्ठा** नान्या **सद्दर्शनं** सत्यसाक्षात्कार **इत्यवेहि** जानीहीत्युपदेशः ।

अत्र श्लोके सहजात्मनिष्ठैव सद्दर्शनमित्युपपादितम् । अन्यत्र "आत्मानमीक्षेते"ति श्लोके जीवस्येशेन भोग्यत्वमुपपाद्य परमप्रपत्तिप्रतिपादनद्वारा प्रकारान्तरेणात्मदर्शनं प्रपञ्चितम् । तस्मादुभयथा स्वरूपसाक्षात्कारः प्रतिपादितो द्रष्टव्यः । ग्रन्थारम्भे मङ्गलाचरणश्लोकद्वयतात्पर्यभूतकैवल्यनिष्ठासायुज्यसम्पत्त्योः क्रमश एकस्य सतो ब्रह्मणो निष्कलसकलरूपसाक्षात्कारस्वरूपत्वं स्मारितं भवति ।

(अ)—अथ जिज्ञासो र्विचारशीलस्यान्वेषणरूपं साधनमुपदिशति द्वन्द्वानीति ।

**द्वन्द्वानि सर्वाण्यखिलास्त्रिपुट्यः**
**किञ्चित्समाश्रित्य विभान्ति वस्तु ।**
**तन्मार्गणे स्याद्गलितं समस्तं**
**न पश्यतां सच्चलनं कदापि ॥ ११ ॥**

(आ)—**सर्वाणि द्वन्द्वानि** आत्मानात्मजडचेतनदृग्दृश्यविषयिविषयादीनीतरेतराश्रयाणि । तथा **अखिलाः त्रिपुट्यः** ज्ञातृज्ञानज्ञेयाद्याश्च **किञ्चिद्वस्तु** किमप्याश्रयभूतं मूलस्वरूपं **समाश्रि-**

त्याश्रयत्वेनालम्ब्य **विभान्ति** प्रतिभान्तीत्यर्थः । **तन्मार्गणे** तस्याश्रयभूतस्य वस्तुनो मार्गणेऽन्वेषणे कृते, **समस्तं** द्वन्द्वत्रिपुटयात्मकं सकलं **गलितं स्यात्** अदर्शनं गच्छेदित्यर्थः । **सत्पश्यतां** सकलद्वन्द्वत्रिपुटीनामाश्रयभूतवस्तुनोऽन्वेषणेन द्वन्द्वेषु त्रिपुटीषु च विगलितासु यदगलितं परिशिष्टं भवति तत्सत्यमन्वीक्षमाणानां **न कदापि चलनं** चलत्वं नास्ति, अचला निष्ठा भवतीत्यर्थः । सत्यमन्वीक्षमाणस्य सत्याकारवृत्तिरूपत्वं भवति । अन्यत्र चोक्तं श्रीमहर्षिणा । "स्वात्मभूतं यदि ब्रह्म ज्ञातुं वृत्तिः प्रवर्तते । स्वात्माकारा तदा भूत्वा न पृथक् प्रतितिष्ठति" इति । एवं सर्वेषां द्वन्द्वानां सकलानां त्रिपुटीनां आश्रयसापेक्षत्वोपपादनद्वारा मूलाश्रयान्वेषणेनाचलत्वप्राप्तिरुक्ता ।

(अ)—अथ बहुभिः प्रकारैः **विद्या कथ** मित्यारभ्य **विधेः प्रयत्नस्येति** श्लोकपर्यन्तं तत्त्वानुसन्धानस्योपायानाह ।

**विद्या कथं भाति न चेदविद्या**
**विद्यां विना किं प्रविभात्यविद्या ॥**
**द्वयं च कस्येति विचार्य मूल-**
**स्वरूपनिष्ठा परमार्थविद्या ॥ १२ ॥**

(आ)—विद्या कथमिति—अविद्या न चेत् विद्या कथं भाति? एवं विद्यां विना विद्या न चेत् कथमविद्या प्रविभाति?

विद्याविद्ये अन्योन्याश्रयं द्वन्द्वमित्यर्थः । द्वयं च विद्याऽविद्या च **कस्येति** विद्यावान्कोऽविद्यावान्कः, को वाऽधिकरणं विद्याविद्ययो-रिति **विचार्य** सूक्ष्मेण तत्त्वविचारेण पर्यालोच्य या **मूलस्वरूपनिष्ठा** मूलस्वरूपे विद्याविद्ययोराश्रये निष्ठा प्रतिष्ठा सैव **परमार्थविद्या** परमः अर्थः प्रयोजनं यस्याः सा परमार्था सा विद्याऽनुभूति-स्वरूपिणी यद्वा परमार्थः सत्यं परमः सर्वोत्कृष्टः अर्थो वाच्य इति व्युत्पत्तेः, तस्य परमार्थस्य सत्यस्य (कर्मणि षष्ठी) विद्या अनुभवपर्याय-वेदनार्थकात् सकर्मकाद्विदेर्धातो रर्थानुगमात् वेद-नात्मकं ज्ञानमेव विद्या भवति । अनुभवात्मकज्ञानमेव परमार्थ-विद्येत्युक्ते लौकिकी विद्या केवलं मानसं ज्ञानमेवेत्यर्थः ।

(अ)—एवं विद्याविद्यात्मकमूलान्वेषण मुपदिश्य ततोऽपि सूक्ष्मतरं ज्ञातृज्ञानज्ञेयरूप-त्रिपुटीमूलाश्रय-विज्ञानेन ज्ञातुः सत्स्वरूपेण तादात्म्यानुभवमाह । बोद्धारमिति ।

**बोद्धारमात्मानमजानतो यो**
**बोधः स किं स्यात्परमार्थबोधः ।**
**बोधस्य बोध्यस्य च संश्रयं स्वं**
**विजानतस्तद् द्वितयं विनश्येत् ॥१३॥**

(भा)—**बोद्धारं** ज्ञातारमात्मानं विषयिण **मजानतो**ऽनु-पलभमानस्य पुंसो **यो बोधो** यज्ज्ञानं जायते **स** बोधः

**परमार्थबोधः** सज्ज्ञानं **स्यात्किम्**? न भवतीत्यर्थः। **बोधस्य** ज्ञानस्य **बोध्यस्य** ज्ञेयस्य च **संश्रयमाश्रयं स्वमात्मानं** विषयिभूतं **विजानतो** ज्ञातवतः पुरुषस्य **तद्द्वितयं** बोधो बोध्यश्च ज्ञानं ज्ञेयमुभयमपि **विनश्येद्विलयं** गच्छेत्। अत्र विषयी विषयो वृत्तिरिति त्रितयं ज्ञातृज्ञेयज्ञानरूपं त्रिपुटीत्युच्यते। ज्ञातुर्विषयिणः स्वज्ञाने सति तस्य सत्स्वरूपादभेदानुभवसिद्धेः सत्स्वरूपस्य न केवलं विषयिणं प्रति, किं तु वृत्तिं विषयं प्रति चाश्रयभूतत्वाद्विषयिणः सत्स्वरूपसाक्षात्कारे वृत्तिविषययोरपि स्वरूपादभेदोऽवगम्यत इति विवक्षया तद्द्वितयं विनश्येदित्युक्तम्। विषयिणश्चिद्रूपत्वात् विषयवृत्तीनां तद्विकारात्मकत्वाद्विषयिज्ञानस्य प्राधान्यं स्पष्टमुक्तम्।

आहचान्यत्र भगवान्महर्षिः (रमणगीता XII 4,5.)—

"अभिन्नो विषयी यस्य स्वरूपान्मनुजर्षभ।
व्यापारविषयौ भातस्तस्याभिन्नौ स्वरूपतः॥"
"विभिन्नो विषयी यस्य स्वरूपादभिमानिनः।
व्यापारविषयौ भातस्तस्य भिन्नौ स्वरूपतः॥"

(अ)—विषयिज्ञानं मूलस्वरूपप्रापकमित्युक्तम्। तच्च स्वरूपज्ञानं विषयिणो व्यवहारसिद्धज्ञानाज्ञानयोरन्यतरन्नेति उभयस्माद्विलक्षणं तच्चिद्रूपमिति पुनर्द्रढयति **निद्रा न विद्येति**।

**निद्रा न विद्या ग्रहणं न विद्या**
**गृह्णाति किञ्चिन्न यथार्थबोधे ।**
**निद्रापदार्थग्रहणेतरा स्या-**
**च्चिदेव विद्या विलसन्त्यशून्या ॥१४॥**

(भा)—**निद्रा** अज्ञानं यत्र पदार्था न गृह्यन्ते **न विद्या** ज्ञानं न भवति । स्वरूपानुभवे आत्मनोऽन्यत्किमपि न दृश्यत इति प्रतिपादनात्पदार्थानामग्रहणं अज्ञानं महती विस्मृतिरेवात्मज्ञानमिति कश्चन मूढः प्रतीयात् । तस्मादग्रहणमज्ञानमेव नात्मज्ञानमित्याह । **ग्रहणं** ज्ञानं पदार्थानामिति शेषः **न विद्या** न ज्ञानम् । विषयिणमन्तरेण विषयाणां ज्ञानमपि न विद्या न परमार्थज्ञानं भवति । **यथार्थबोधे**ऽनुभवात्मके **किञ्चि**त्किमपि **न गृह्णा**त्यात्मस्वरूपादन्यत्वेनेत्यर्थः । **निद्रापदार्थग्रहणेतरा** निद्राऽज्ञानं पदार्थानां ग्रहणं लौकिकं ज्ञानं च निद्रापदार्थग्रहणे ताभ्यामितरा ज्ञानाज्ञानविलक्षणा **चिदेव**, आश्रयभूतचैतन्यमेव, **विद्या** सद्विद्या यथार्थबोधो भवतीत्यर्थः । द्वन्द्वविलक्षणत्वोक्त्या शून्यमिति न मन्तव्यमिति **अशून्येति** विशेषणम् । पूर्णा सा चिदित्युक्तम् । न सा चिज्जडवत्तटस्थेति द्रढयितुं **विलसन्तीति** विशेषणम् । स्वयं भासमाना ज्ञानाज्ञानात्मकं द्वन्द्वं भासयत्यपीति ग्राह्यम् ।

(अ)—अथ सत्यं ज्ञानमेकमेव, नानारूपाणां ज्ञानानां पृथग्भावो नास्तीति स्वर्णभूषणदृष्टान्तेनाह **सत्य** इति ।

**सत्यश्चिदात्मा विविधाकृतिश्चित्**
**सिद्ध्येत्पृथक्सत्यचितो न भिन्ना ।**
**भूषाविकाराः किमु सन्ति सत्यं**
**विना सुवर्णं पृथगत्र लोके ॥ १५ ॥**

(भा)—**चिदात्मा** ज्ञानस्वरूप आत्मा **सत्य** एक एव, **विविधाकृतिश्चित्** नानारूपं ज्ञानं इत्यर्थः **सत्यचितः** सत्यज्ञानस्वरूपादेकस्मात् **पृथक् भिन्ना न सिद्ध्येत्** । नानारूपात्मकज्ञानस्य निर्मूलज्ञानस्य सत्यज्ञानात् पृथक्सत्ता नास्तीत्यर्थः । अत एव तादृशं नानाज्ञानमज्ञानमाहुः । **अत्र लोके सत्यं सुवर्णं विना** स्वरूपभूतोपादानद्रव्यं हित्वा **पृथक्** भेदतः **भूषाविकाराः किमु सन्ति ?** भूषणभेदानामाकारभेदेऽपि सुवर्णात् पृथग्भावो नास्तीति भावः । एकस्यैव सतो भावस्य नानारूपत्वं पूर्वमेव निरूपितम् । अत्र तस्य सद्भावस्य चित्स्वरूपत्वमुपपाद्य, चित्स्वरूपस्याखण्डात्मनोऽरूपस्य रूपभेदा अस्मदादयो जगच्चेति गमयति । चिद्रूपत्वादेव जगतो मनोमयत्वं पूर्वमुपपादितम् ।

(अ)—अस्मत्प्रत्ययगोचरस्य विषयिणो मूलमन्वेषणीयत्वेन प्रतिपादयितुमाह **तद्युष्मदो**रिति ।

**तद्युष्मदोरस्मदि संप्रतिष्ठा**
**तस्मिन्विनष्टेऽस्मदि मूलबोधात् ।**
**तद्युष्मदस्मन्मतिवर्जितैका**
**स्थितिर्ज्वलन्ती सहजाऽऽत्मनः स्यात् ॥**

(भा)—**तद्युष्मदोः** तच्च युष्मच्च तद्युष्मदी तयोः तत्प्रत्यय-गोचरस्य परोक्षविषयस्य युष्मत्प्रत्ययगोचरस्य प्रत्यक्षविषयस्य च **अस्मदि** अस्मत्प्रत्ययगोचरे विषयिणि **संप्रतिष्ठा** संस्थितिर्भवति । उत्तमपुरुषवाच्यं अहंप्रत्ययगोचरं विषयिणमाश्रित्य परोक्षप्रत्यक्ष-विषयौ प्रथममध्यमपुरुषवाच्यौ तत्प्रत्यय-त्वंप्रत्ययगोचरौ व्यवहृतौ भवतः । तस्मात्त**स्मिन्नस्मदि** अस्मत्प्रत्यये **मूलबोधात्** मूलस्य आश्रयस्य स्वरूपस्य बोधाद्वेदनाद् **विनष्टे** विलयं गते सति **तद्युष्मदस्मन्मतिवर्जिता** तच्च युष्मच्च अस्मच्च तद्युष्मदस्मदः ता एव मतयः प्रतीतयः ताभिः वर्जिता रहिता, तदादिप्रत्ययशून्या, **एका** भेदवर्जिता, **ज्वलन्ती** भासमाना, **आत्मनः स्थितिर्निष्ठा, सहजा स्यात्**, अकृत्रिमा सिद्धा भवतीत्यर्थः । एवं तदादि-प्रत्ययव्यवहारास्पदभूतस्य अहंप्रत्ययस्य मूलान्वेषणेन सहजनिष्ठो-पाय उपदिष्टः ।

(अ)—देशकालातीतस्य सतः पुरुषस्य देशात्मना कालात्मना चावस्थितत्वाद्देशकालतत्त्वविचारद्वारापि तस्य साक्षात्कारो युक्त इति प्रतिपादयति **भूतमिति** ।

भूतं भविष्यच्च भवत्स्वकाले
तद्वर्तमानस्य विहाय तत्त्वम् ।
हास्या न किं स्याद्गतभाविचर्चा
विनैकसंख्यां गणनेव लोके ॥

(भा)—भूतमतीतकालः भविष्यदनागतः चेति समुच्चयः उभावपि स्वकाले सम्भवसमये, भवद्वर्तमानमेवेति ग्राह्यम् । भूतवृत्तान्तः प्रचलनसमये वर्तमान एवासीत् । एवं भविष्यद्-वृत्तान्तः प्रचलनसमये वर्तमान एव भविष्यति । तस्माद्भूतस्य भविष्यतो वा तत्त्वे सूक्ष्मतरं विचारिते उभयोरपि वर्तमानं स्वरूपमित्यवगम्यते । तत् तस्मात्कारणात् वर्तमानस्य तत्त्वं स्वरूपं विहाय त्यक्त्वा, क्रियमाणा गतभाविचर्चा गतं भूतं भावि भविष्यत् तयोश्चर्चा लोके व्यवहारे एकसंख्यां विना एकाख्यामाद्यां संख्यां हित्वा गणनेव द्वित्र्याद्युपरिसंख्यागणनेव हास्या किं न स्यात्? उपहसनीयैव भवेदिति भावः । यथा संख्यागणनायामाद्या संख्यैकाख्या मूलसंख्या भवति, यथा चैकसंख्यया क्रमश उपर्युपरि पूरणेनैव सङ्कलनमपि शक्यं भवति, यथा चेदृशीमेकसंख्यां हित्वा गणनैवाशक्योपहसनीया च तथा वर्तमानं हित्वा न केवलं भूतादिकालचलनमशक्यं, किं तु गणनाया एकसंख्येव कालगतेर्वर्तमानमेव सर्वत्र स्वरूप-मित्यर्थः । तस्माद्वर्तमानमयः काल इति सिद्धम् । एवं

नित्यवर्तमानस्वरूपं कालात्मनावस्थितं सद्ब्रह्मेति द्योतनेन मणिगणस्य सूत्रमिव चलतः कालस्य वर्तमानं ब्रह्मेति तत्त्वमवधार्यम् ।

अतीतवृत्तेरनागतवृत्तेश्चान्तरं वर्तमानमध्ययया जागरूकया धिया पश्यन्नविच्छिन्नविज्ञानधारायां वृत्त्यन्तरमखण्डवर्तमानं प्रज्ञानघनं ब्रह्मैवात्मनि साक्षात्कुरुत इति कालतत्त्वानुसन्धानद्वारा स्वरूपनिष्ठा प्रदर्शिता ।

(अ)—अथ शरीरमेवाहमिति देहात्मबुद्ध्यैव देशकालावच्छिन्नत्वमस्माकं देशकालावच्छिन्नस्यास्मत्प्रत्ययाश्रयस्याखण्डात्मनः स्वरूपमेवास्माकं परमार्थसत्यमिति ज्ञाते, कथमस्माकं देशकालावस्थितत्वं आपद्यत इति स्पष्टं स्यादित्याह क्व भातीति ।

**क्व भाति दिक्कालकथा विनास्मान्**
**दिक्काललीलेह वपुर्वयं चेत् ।**
**न क्वापि भामो न कदापि भामो**
**वयं तु सर्वत्र सदा च भामः ॥**

(भा)—अस्मान्विना द्रष्टारं विषयिणमन्तरेण दिक्कालकथा दिशः देशस्य कालस्य च कथा व्यवहारः क्व भाति ? न भातीत्यर्थः । द्रष्टुर्विषयिणश्चिद्रूपत्वात् चितो मनोमयत्वेन विजृम्भणे देशात्मना कालात्मना चावस्थानं सिद्धं भवति ।

नानारूपस्वीकार्यपारविचित्रशक्तिमत्त्वं चितः स्वतः सिद्धमभ्युपगम्यमिति "सर्वमप्यभवत्स एकः" इति शास्त्रारम्भश्लोके प्रतिपादितमिह स्मारयामः। देशं विना नानाकारस्यासिद्धेः कालं विना चलनस्यैवाशक्यत्वाच्च देशकालात्मना चित्स्वरूपस्य विभानं चितो मनोमयत्वं साधयतीति द्रष्टव्यम्। यद्यपि देशः कालो वा चिच्छक्तेर्विकार आकारविशेषो वा भवति, तथापि चित्स्वरूपान्न पृथग्भावः कालस्य देशस्य वेति मन्तव्यम्। चिद्रूपब्रह्मणस्तच्छक्तेश्च दीपप्रभयोरिव तादात्म्यसम्बन्धात्। आह चाचार्य उमासहस्रे।

"वाचैव शक्यते कर्तुं विभागः शक्तिवस्तुनोः।
नानुभूत्या ततो द्वैतमनयो र्व्यावहारिकम्॥"

तस्माच्चित्स्वरूपस्यात्मनो मनोमयत्वे देशकालावच्छिन्नत्वं देहात्मबुद्ध्या भवति। देशकालविजृम्भितस्य मनोमयस्याश्रयभूतमूलस्वरूपमेवास्मदादीनां परमार्थसत्यम्। तस्मादस्मान्विना दिक्कालकथैव नास्तीत्युपपन्नमेवेदं भाषितम्। तदेवाह स्पष्टं द्वितीयपादेन। इह लोके, वयमस्मदादयो वपुश्चेत् शरीरमेव यदि स्याम, तर्हि दिक्काललीला देशकालयोश्चिच्छक्तिविभूतिभूतयो र्लीला विलासो भवति। दर्शिता युक्तिः। न क्वापि भामः अस्मन्मूलस्वरूपस्य देशावच्छिन्नत्वं नास्ति। न कदापि भामः तथा कालावच्छिन्नत्वं नास्ति। तु किं तु वयं सर्वत्र देशे सदा च

काले भासः, अस्मत्सत्यस्वरूपस्य देशकालात्मकत्वसिद्धेरस्माकं सर्वत्र सदा च सत्ता ।

देशकालाभ्यामवच्छिन्नत्वे मनोमयत्वं, अनवच्छिन्नत्वे मनोमूलस्वरूपत्वमित्युभयथा चिदात्मतद्विलासप्रतिपादनात् एकस्यैव सतः पुरुषस्य सकलनिष्कलप्रकाराभ्यां ग्रहणं स्मारितं भवति ।

(अ)—अज्ञविज्ञयोरनुभवे भेदमाह, **देहात्मभावे** इति ।

**देहात्मभावे ज्ञजडौ समाना**
**वेकस्य देहे हृदि दीप्त आत्मा ।**
**आक्रम्य देहं च जगच्च पूर्णः**
**परस्य मेयं तनुमात्रमात्मा ॥ १९ ॥**

(भा)-—**देहात्मभावे** देह आत्मा इति भावस्तस्मिन्विषये **ज्ञजडौ** ज्ञः विद्वान् जडश्चाविद्वांश्च **समानौ** तुल्यौ । देहात्मभावे द्वयोस्तुल्येऽपि भेदमाह । **एकस्य** ज्ञस्य विदुषः **देहे** शरीरे **हृदि** हृदये मूलस्थाने **आत्मा** परमः शारीरो भूत्वा **दीप्तः** अहमहमिति स्फुरन् ज्वलितस्सन् **देहं** शरीरं **जगच्च** लोकं च **आक्रम्य** व्याप्य **पूर्णः** सर्वात्मको भवति । **परस्य** अन्यस्य जडस्याविदुषः **मेयं** मनसेन्द्रियैर्वा मातुं शक्यं **तनुमात्रं** शरीरमेव **आत्मा** भवति । शरीर एवात्मानमनुभवत्यपक्वस्तस्माच्छरीरमेवाहमिति मन्यते । पक्वो विद्वांस्तु न तथा । स तु शरीरात्पृथगहमिति शरीरस्या-

न्तर्हृदये निरन्तरं स्फुरन् सर्वं शरीरमाक्रम्य सर्वं जगच्च व्याप्य पूर्णोऽहमित्यनुभूत्या विलसन्नखण्डं सदेव स्वशरीरं मन्यते। एवमज्ञविज्ञयोर्भेदः अनुभवस्वरूपः, न तु तत्त्वविचारपुष्पितः मनोनिश्चयस्वरूप इत्युक्तं भवति। विज्ञस्य सर्वात्मकं सदेवात्मा। तत्रेदं शरीरमप्यन्तर्भवति। अज्ञस्य शरीरमात्रमात्मेति संक्षेपेणार्थः। अपक्वस्य ग्रहणसामर्थ्यलोपात्तस्य ज्ञानमपूर्णं भवति। तदेव पूर्णं सत्यमिति प्रतीतिरेव मिथ्याज्ञानम्। न तु तदपूर्णं ज्ञानमेव मिथ्येति वाच्यम्। अपक्वस्य स्वशरीर एवात्मानुभवः, पक्वस्य सर्वशरीरभूते जगति चात्मानुभवो न केवलं स्वशरीर एवेति प्रकारान्तरेण वक्तुं युक्तम्। अस्य श्लोकस्य गम्भीरो भावोऽस्माभिर्भूमिकायां प्रपञ्चित इत्यत्रैतावता विरमामः।

(अ)—एवं व्यष्टिशरीरमुद्दिश्याज्ञविज्ञयोर्देहात्मभावे तुल्यता विशेषश्च प्रपञ्चितौ। अथ समष्टिशरीरं जगदधिकृत्य तयोरुभयोस्तुल्यत्वं भेदश्चोच्येते। अज्ञस्येति।

**अज्ञस्य विज्ञस्य च विश्वमस्ति**
**पूर्वस्य दृश्यं जगदेव सत्यम्।**
**परस्य दृश्याश्रयभूतमेकं**
**सत्यं प्रपूर्णं प्रविभात्यरूपम्॥ २०॥**

(भा)—अज्ञस्याविदुषोऽपक्वात्मन इत्यर्थः; विज्ञस्य विदुषः पक्वात्मनश्च द्वयोरपि विश्वमस्ति द्वाभ्यामपि जगदस्तित्वेन

गृह्यते । **पूर्वस्य** अज्ञस्य मूलमजानतो **दृश्यं** चक्षुर्ग्राह्यं नामरूपात्मकं **जगदेव सत्यं** परमार्थतत्त्वं भवति । जगतो मूलस्वरूपं स न गृह्णातीत्यर्थः । दृश्यमानमेव परमार्थत्वेन गृह्णात्यपक्वात्मा स्थूलधीः । पक्वस्तु न तथा, **परस्य** विज्ञस्य पक्वात्मनः, **दृश्याश्रयभूतं** दृश्यस्य नामरूपात्मकस्य जगत आश्रयभूत माधारमेक **मद्वितीयं** **प्रपूर्णमभिन्नं** सर्वव्यापि **सत्यं** **अरूपं** रूपवर्जितं सत् **प्रविभाति** प्रकर्षेण विशेषेण च स्वयं प्रकाशते । विज्ञस्यापि विश्वमस्तीत्युक्तत्वाद्विश्वस्मिन्ननुस्यूतमरूपं ब्रह्म च विज्ञस्य भातीति भावो बोध्यः । समूलं ज्ञानं विदुषो निर्मूलं स्थूलं ज्ञानं पाक्षिकमपूर्णमविदुषो ज्ञानमित्यर्थः । पूर्वश्लोक इवात्रापि जगज्ज्ञानस्यापूर्णसत्यत्वं ग्राह्यम् । न मिथ्यात्वम् । इदमुपक्रमे भूमिकायां सविस्तरमुपपादितं ।

(अ)—अथ दैवपुरुषकारवादमनवस्थित मवलोक्य, उभयोरप्येकमूलत्वमुक्त्वा तद्विदुषां दैवपुरुषकाराभ्यां अबाधितत्वमाह **विधेरिति** ।

**विधेः प्रयत्नस्य च कोऽपि वाद**
**स्तयोर्द्वयोर्मूलमजानतां स्यात् ।**
**विधेः प्रयत्नस्य च मूलवस्तु**
**सञ्जानतां नैव विधि र्न यत्नः ॥२१॥**

(भा)—विधेर्जन्मान्तरीयकर्मपाकरूपस्य प्रारब्धादृष्टादि-पदवाच्यस्य दैवस्य, प्रयत्नस्य पुरुषकारस्य च कोऽपि वादोऽव्यवस्थितो विवादः तयोर्द्वयोः दैवपुरुषकारयोः मूलं जन्मस्थानमजानतां अविदितवतां पण्डितंमन्यानां स्याद्भवेत्। विधेर्दैवस्य प्रयत्नस्य च पुरुषकारस्य च मूलवस्तु कारणभूतं स्वरूपं सञ्जानतां सम्यग्विदितवतां पुरुषाणां विधिर्नैव बाधको भवति। यत्नः पुरुषकारोऽपि न बाधको भवति।

सर्वं दैवकृतं न केवलमस्माभिरनुभूयमानं फलं क्रियमाणः प्रयत्नोऽपि विधिप्रेरित एव, इति वादे पूर्वकृतस्य पुरुषकारस्य फलं विधिरूपं प्रवर्तते, विधिना च प्रेरितः पुरुषकारः सम्भवति, इति पुरुषकारात्पूर्वं विधिः विधेः पूर्वं पुरुषकारः इत्यन्योन्याश्रयानवस्थितत्वादुभयोर्मूलं किमप्युभयविलक्षणं स्यात् तदन्वेषणीयमित्युपदिष्टम्।

अत्रेदमवगन्तव्यम्। विधिप्रयत्नावस्वतन्त्रौ। विधिः प्रयत्नपरतन्त्रः। प्रयत्नश्चेच्छाधीनः। इच्छा त्वहङ्कारसहचारिणी कर्मकर्तुः स्वतन्त्रंमन्यस्य जीवस्य। जीवस्य स्वातन्त्र्यं जीवव्यक्त्याश्रयभूत आत्मनीश्वरे। एवं दैवपुरुषकारयोरात्मपरतन्त्रत्वादुभयोर्मूलमात्माऽऽन्वेषणीयत्वेन प्रतिपादितः। भूमिकायां पुरुषकारविचारावसरे चेदं सविस्तरमुपपादितम्।

(अ) — आत्मज्ञानं निष्ठास्वरूपमित्याह, यदीशितुरिति।

**यदीशितुर्वीक्षणमीक्षितारं**
**अवीक्ष्य तन्मानसिकेक्षणं स्यात् ।**
**न द्रष्टुरन्यः परमो हि तस्य**
**वीक्षा स्वमूले प्रविलीय निष्ठा ॥**

ईक्षितारं द्रष्टारं अवीक्ष्य अदृष्ट्वा, ईशितुरीश्वरस्य (कर्मणि षष्ठी) **यद्वीक्षणं** दर्शनं भवति **तन्मानसिकेक्षणं** मनोमयं दर्शनं **स्यात्** । न तत्स्वरूपसाक्षात्करणं भवति । आत्मबोधं विना नेश्वरबोधः । ब्रह्मण एव हृद्यात्मरूपेण भानं ज्ञापयितुमात्मा द्रष्टा प्रथमं ज्ञातव्य इत्युक्तम् । द्रष्टरि ज्ञाते द्रष्टुर्मूलस्वरूपमीश्वर एवेत्यवगम्यते । अत एवात्मनो मनोमयत्वे यदीशदर्शनं भवति तन्मनोमयमेव दर्शनम् । आत्मनो मनोमूले सहजस्वरूपे सिद्धे यदीशदर्शनं भवति तदात्मस्वरूपमेव भवतीति हेतुमाह । **हि** यस्माद्धेतो **द्रष्टुः परमः अन्यो नेति** पृथग्वाक्यम् । द्रष्टुर्जीवाद् विषयिणः परम ईशोऽन्यो भिन्नो **न** भवति । तस्माद् जीवपरमयो श्चित्स्वरूपत्वेनाभेदात् द्रष्टुर्जीवाख्यस्य स्वबोधं विना परमस्य यथार्थदर्शनं न भवति । तर्हि दर्शनं किं लक्षणमित्याह । **तस्य वीक्षा स्वमूले प्रविलीय निष्ठा** भवतीति वाक्यम् । तस्यात्मनो **वीक्षा** दर्शनं **स्वमूले** मनोमयस्यात्मनो द्रष्टुर्मूलाश्रये **प्रविलीय** स्वयमदर्शनं गत्वा या **निष्ठा** सा सहजा स्थितिर्भवति ।

(अ—)आत्मदर्शनस्वरूपमाह आत्मानमीक्षेतेति ।

**आत्मानमीक्षेत परं प्रपश्ये-**
**दित्यागमोक्तेः सुलभो न भावः ।**
**नात्मैव दृश्यो यदि का कथेशे**
**स्वयं तदन्नीभवनं तदीक्षा ॥ २३ ॥**

(भा)—**आत्मानमीक्षेत** आत्मा द्रष्टव्यः **परं प्रपश्येत्** ईश्वरः साक्षात्कर्तव्यः **इत्यागमोक्तेः** अनुभूतिमतामाप्तानां वाक्यस्य **भावो न सुलभः** तात्पर्यं दुरवगाहमित्यर्थः । कथं दुरवगाहो भाव इति दर्शयति । **आत्मैव न दृश्यो यदि, ईशे का कथा?** आत्मा द्रष्टैव न **दृश्यो यदि** विषयत्वेन गोचरो न भवति यदि, **ईशे** विषय-सप्तमी, ईश्वरस्य दर्शनविषयत्वं प्रति कथनस्यैवावकाशो नास्ति । अथात्मदर्शनपरदर्शनागमोक्ते दर्शनपदस्यैव लक्ष्यं भावमुद्घाटयितु-माह **स्वयं तदन्नीभवनं तदीक्षा** इति । **स्वयं** प्रकृत आत्मा शारीरो जीवाख्यो द्रष्टा विषयी सम्बन्धित्वेनाध्याहार्यः । तस्य साक्षात् **तदन्नीभवनं** भवतेर्ल्युट् भवनं अनन्नं अन्नं सम्पद्यमानं भवनमन्नीभवनं तस्येश्वरस्यान्नीभवनं आहारीभाव एव **तदीक्षा** ईश्वरसाक्षात्कारः । ईश्वरं दिदृक्षमाणो जीवस्तस्याहारो भोग्यो भवति । एवं गृहीतुर्भोक्तुरीशस्य ग्राह्यो जीवो भोग्यो भवति । नेह द्वैतापत्तिः । चित्स्वरूपे जीवस्येश्वरेण सह सायुज्याख्यता-दात्म्यसिद्धेः । न वेदमात्मदर्शन-व्याख्यानं सहजात्मनिष्ठाप्रति-

पादकेन पूर्वोक्तेन सद्दर्शनस्वरूपेण विरुद्ध्यते। निष्ठासायुज्ययो-रभेदोऽन्यत्र विचारितः।

(अ)—ईश्वरदर्शनस्वरूपमुक्तम्। अथात्मदर्शनान्न भिद्यते परदर्शनमिति विवृणोति धिये प्रकाशमिति।

**धिये प्रकाशं परमो वितीर्य**
**स्वयं धियोऽन्तः प्रविभाति गुप्तः।**
**धियं परावर्त्य धियोऽन्तरेऽत्र**
**संयोजनान्नेश्वरदृष्टिरन्या ॥ २४ ॥**

(भा)—**परम** ईश्वरो **धिये** बुद्ध्यै **प्रकाशं वितीर्य** दत्त्वा **स्वय**मीश्वरो **धियो** बुद्धेरन्त**र्गुप्तो** गूढोऽगोचरः सन् धिय इति शेषः। **प्रविभाति** विलसति। **धियं** बुद्धिं **परावर्त्य** बहिर्गतामहं-धियमन्तर्नेतुं निवर्त्य **धियो**ऽहंधियः **अत्र** हृद्यन्तरे **संयोजनात्** वियोजनान्निवर्त्य मूलस्थाने यत्संयोजनं तस्मादी**श्वरदृष्टिरन्या** न भिन्ना न भवति।

(अ)—अहंधियः स्वरूपं विचारयति त्रिभिः श्लोकैः।

**न वक्ति देहोऽहमिति प्रसुप्तौ**
**न कोऽपि नाभूवमिति प्रवक्ति।**
**यत्रोदिते सर्वमुदेति तस्य**
**धियाऽहमः शोधय जन्मदेशम् ॥२५॥**

(भा)—न वक्ति देह इति। देहः शरीरमहमिति न वक्ति ब्रवीति। तस्माद्देहो नाहमिति स्पष्टम्। प्रसुप्तौ निद्रायां नाभूवं नासमिति न कोऽपि प्रवक्ति न कस्यापि नासमिति मतिर्भवति। शरीरविलक्षणः कोऽपि निद्राजागरणयोरविशेषेणानुगतोऽहमस्मीति भावः। यत्र यस्मिन्नहमाख्ये भावे उदिते उद्गते प्रवृत्ते सर्वं मुदेति मानसेन्द्रियगोचरं भवति। तस्याहमोऽहंप्रत्ययस्याहंभावस्य वा जन्मदेशं धिया शोधय उत्पत्तिस्थानं सूक्ष्मया बुद्ध्या परीक्षस्व। अत्रायमाचार्यस्य श्लोको भवति।

"अहमिति स्मृतिः क्व नु विभासते।
इदमनुस्मरन् महति लीयते॥"

(अ)—एवमहङ्कारस्य सर्वव्यवहारज्ञानहेतुत्वमुक्त्वा तस्य व्यापारभेदैर्नामान्तराण्याहोत्तरश्लोकेन देहो न जानातीति।

देहो न जानाति सतो न जन्म
देहप्रमाणोऽन्य उदेति मध्ये।
अहंकृतिग्रन्थिविबन्धसूक्ष्म-
शरीरचेतोभवजीवनामा॥ २६॥

(भा)—देहो न जानाति जडत्वात्। सतो न जन्म सद्वस्तुनश्चिद्घनत्वान्नोत्पत्तिः। तथापि कथमस्मदादीनां व्यवहारः?

आह । **मध्ये** उभयोर्मध्ये अनुदयस्य सच्चिदात्मनो जडस्य देहस्य चेत्यर्थः । **अन्य** उभयविलक्षणो **देहप्रमाणो** देहः प्रमाणं यस्य सः यावान्देहस्तावानित्यर्थः, **उदेति** जायते कोऽयमुदेति के वास्य व्यापारा इति द्योतयितुं अस्य विविधानि नामान्याह । **अहंकृतिग्रन्थिविबन्धसूक्ष्मशरीरचेतोभवजीवनामा** अहङ्कृति-रहङ्कारः, ग्रन्थिश्चिज्जडयोर्ग्रन्थिः, विबन्धः मोक्षप्रतिद्वन्द्वी, सूक्ष्मशरीरं सूक्ष्मं शरीरं, चेतो मनः, भवः संसारः, जीवः प्राणात्मा च, नामानि यस्य सः । अन्य उदेतीति पूर्वेणान्वयः ।

अहङ्कारः-चिदात्मनः सर्वव्यापकत्वेऽप्ययं जडचेतनमध्यवर्ति-त्वात् उभयसंबन्धी यावद्देहमभिमानेन व्याप्तवानित्यर्थः ।

पूर्वशास्त्रेभ्यो विलक्षणमिदमुक्तं, यज्जडचेतनमध्योदितमहङ्कार-मर्थान्तरेषु प्रसिद्धैः पदैरभिधत्ते । अत्र देहात्मनोर्मध्येऽहंपदार्थ-स्याभासमानत्वादहंकृतिनामोपपद्यते । देहात्मबन्धकत्वात् चिज्जड-ग्रन्थिः ; अत एव विबन्धः ।

स्थूलस्य देहस्य कारणस्यात्मनश्च मध्यगतत्वात् सूक्ष्मपदव्य-वहार्यं, देहमाश्रित्य देहव्यापारवत्त्वाच्छरीरत्वमिति हेतोः सूक्ष्म-शरीरमिति नाम ।

मनःप्राणात्मकस्य सूक्ष्मशरीरस्य मनःप्रधानत्वात् मनः । प्राणव्यापारवत्त्वाज्जीवः । अनवस्थित-जन्मनिधनरूप-परिभ्रम-णात् संसारः । वक्तव्य मन्यत्पूर्वमेव विचारितम् ।

(अ)—अहङ्कारविलासमाह **रूपोद्भव** इति ।

**रूपोद्भवो रूपतातिप्रतिष्ठो**
**रूपाशनो धूतगृहीतरूपः ।**
**स्वयं विरूपः स्वविचारकाले**
**धावत्यहङ्कारपिशाच एषः ॥ २७ ॥**

(भा) —**रूपोद्भवः** रूपेषु सूक्ष्मेषु स्थूलेषु वा उद्भवो जन्म यस्य सः, **रूपततिप्रतिष्ठः** रूपाणां ततिषु समुदायेषु प्रतिष्ठा स्थितिर्यस्य सः, **रूपाशनः** रूपाण्यशनमाहारो जीवनसाधनं यस्य सः । **धूतगृहीतरूपो** धूतानि त्यक्तानि गृहीतानि स्वीकृतानि च रूपाणि येन सः । एकस्माद्रूपादन्यद्रूपमुपैत्यालम्बनार्थम् । **स्वयं विरूपः**, यद्यप्यस्याहङ्कारस्य रूपाण्येव जन्मजीवनादिचेष्टारम्भणानि, तथाप्ययं रूपशून्य एवेत्यर्थः । तादृश एषोऽ**हङ्कारपिशाचः** अहङ्कार इति पिशाचः **स्वविचारकाले धावति** स्वस्यैव आत्मनोऽहङ्कारभूतस्य विचारकाले कोऽहंरूपतत्त्वविचारे प्रवृत्ते **धावति** पलायते अदर्शनं गच्छति इत्यर्थः । चिदाभासस्याहङ्कारस्य चिदात्ममूलत्वेऽपि विषयग्रासाय सन्ततचरत्प्राणग्रस्तसूक्ष्मशरीरेण तादात्म्यसंबन्धादस्य चञ्चलत्वं रूपे रूपे जन्मस्थितिनाशाश्च भवन्ति ।

अहङ्कार एव जीव इति पूर्वश्लोके दर्शनात् अहङ्कारनाशाज्जीवनाशो वक्तव्यः अहङ्कारलक्षणस्य जीवत्वस्य नाशो भवत्येव,

न तु जीवव्यक्तेः । व्यक्तिगतस्याहङ्कारस्य नाशे शुद्धाहम्भाव-स्फूर्तिरवगन्तव्या । पूर्वमुपन्यस्तमिदं विस्तरेण ।

(अ)—सर्वजयाय चतुरमुपायमाह भावे इति ।

**भावेऽहमः सर्वमिदं विभाति**
**लयेऽहमो नैव विभाति किञ्चित् ।**
**तस्मादहंरूपमिदं समस्तं**
**तन्मार्गणं सर्वजयाय मार्गः ॥ २८ ॥**

(भा)—**अहमो भावे** । उक्तलक्षणेऽहंभावे सत्येवेदं **सर्वं** जगद्विभाति प्रतिभाति । **अहमो लये** तस्मिन्नहंभावे लीने सति, **किञ्चिन्नैव विभाति** । न किमपि मूलस्वरूपाद्भेदभावेन दृश्यते । **तस्मादहंरूपमिदं समस्तम्** । अनेन कारणेन सर्वं जगदहंभावविकारात्मकमेव । **तन्मार्गणं** तस्याहमो मार्गणमन्वेषणं **सर्वजयाय** सर्वेषां सङ्गानां जयाय विधूननाय त्यागायेत्यर्थः **मार्गः** साधनं भवति ।

अत्र "धिया सहोदेति" "शब्दादिरूपं" इति श्लोकद्वय-व्याख्या स्मर्तव्या ।

(अ)—अहंभावस्यान्वेषणेन लये सति निष्ठा सिद्ध्यती-त्याह सत्येति ।

**सत्या स्थितिर्नाहमुदेति यत्र**
**तच्चोदयस्थानगवेषणेन ।**
**विना न नश्येद्यदि तन्न नश्येत्**
**स्वात्मैक्यरूपा कथमस्तु निष्ठा ॥२९॥**

(भा)—**यत्र** यस्यां स्थितावहं **नोदेति**, अहंधीनोंद्भूत्य प्रवर्तते, **सा सत्या स्थितिर्भवति** । अहंभावस्योदयात्प्राग्या स्थितिः सा तन्नाशात् परमपि वर्तत एवेति ग्राह्यम् । उदयात् प्राङ्नाशात्परं च सिद्धायाः स्थितेरहंभावप्रवृत्तिकालेऽपि सत्ता वर्तमानाऽपि, अहंभावप्रवर्तनेनात्माभासस्याहङ्कारस्य न विदिता भवति । तस्मादवस्थात्रयवर्तिनी सा स्थिति-रित्यवधेयम् ।

**तच्चोदयस्थानगवेषणेन विना न नश्येत्** तच्चाहं उदयस्थान-स्य जन्ममूलस्य **गवेषणेन विना**ऽन्वेषणमन्तरा **न नश्येत्** न लीयेत, **यदि तन्न नश्येत्** तदहं यदि न लीयेत **स्वात्मैक्यरूपा निष्ठा कथमस्तु** जीवपरयोरभेदात्मरूपा निष्ठा कथं भवतु ? न भवतीत्यर्थः ।

(अ)—बहुप्रकारमन्वेषणमार्गमुपदिश्य, प्रकारान्तरेण हृदय-विद्यासारभूतं मज्जनाख्यं मार्गमाह **कूपे यथेति** ।

**कूपे यथा गाढजले तथान्त-**
**र्निमज्ज्य बुद्ध्या शितया नितान्तं ।**
**प्राणं च वाचं च नियम्य चिन्वन्**
**विन्देन्निजाहंकृतिमूलरूपम् ॥३०॥**

(भा)—**यथा गाढजले** कूपेऽगाधनीरे कूपे **निमज्ज्य** वाक्प्राणनियमनेन जलस्यान्तर्गत्वा तत्र नष्टं वस्तु गृह्णाति **तथा नितान्तं** अत्यन्तं **शितया** कुशाग्रया **बुद्ध्या** धिया **प्राणं वाचं च नियम्य** उच्छ्वसितनिश्वसितवर्जं मौनी भूत्वा **निजाहंकृतिमूलरूपं विन्देत्** निजाहङ्कृतेः स्वीयाहङ्कारस्य मूलरूपं जन्मस्थानं प्राप्नुयात् । वाङ्नियमनेन मनोनियमनमपि लक्षितम् ।

यद्यपि मनोनियमनस्यैव शास्त्रेषु प्राधान्येनोपदेशो भवति, तथापि गाढजलनिमज्जनदृष्टान्तानुरोधेन वाक्प्राणनियमनोपदेशस्य स्वारस्य मवधेयम् । ननु मनोविजृम्भणस्य प्रतिबन्धने साधनभूतो वाङ्निरोधः, तस्मात्तन्नियमेन मनोनियमनं किञ्चिद्भवतु । किमर्थं प्राणनियमनं ? उच्यते । शरीरे प्राणाधीनं हि मनः । क्षुत्पिपासाभोगेच्छामयस्य प्राणस्य विषयाकर्षणे, मनस्तं प्राणमवशतयाऽनुयाति । तस्मात्प्राणस्य शोधनसंस्कारादिभिरावश्यकः परिपाकः प्राणरोधेन सम्पाद्यते ।

(अ)—वाक्प्राणनियमनेन मज्जनाख्यं साधनमुक्तम् । अथ मौनेन मनसा विचाररूपमुपायान्तरमाह **मौनेनेति** ।

**मौनेन मज्जन्मनसा स्वमूल-**
**चर्चैव सत्यात्मविचारणं स्यात् ।**
**एषोऽहमेतन्न मम स्वरूप**
**मिति प्रमा सत्यविचारणाङ्गम् ॥ ३१ ॥**

(भा)—**मौनेन** निःशब्देन निश्चिन्तनेन दूरीकृतात्मेतरचिन्तनेनेति यावत् । **मज्जन्मनसा** मज्जता अन्तर्गाहमानेन मनसा चेतसा क्रियमाणा **स्वमूलचर्चा** स्वस्यात्मनो मूलस्याश्रयस्वरूपस्य चर्चा विचारणा **सत्यात्मविचारणं स्यात्** । सत्यस्यात्मनो विचारणं भवति । ईदृशसत्यात्मविचारणस्योपायभूतमङ्गमाह । **एषोऽहं** अयमात्मा द्रष्टा विषयी न कदापि दृश्योऽहम् । एतदिदं शरीरं **न मम स्वरूपमिति प्रमा**ऽनुभवक्षमा शास्त्रीया बुद्धिः **सत्यविचारणाङ्गम्** सत्यस्यात्मनो विचारणस्याङ्गं भवति । अनेन शास्त्रीयो दृग्दृश्यविवेको न कदापि ज्ञानं भवतीति गम्यते । शास्त्रज्ञानस्य किञ्चिदस्ति प्रयोजनमिति शास्त्रज्ञानं न निषिद्धं । किं तु जन्मान्तरे वा स्यात् शास्त्रज्ञानं, शास्त्रज्ञानमन्तरा नास्त्यात्मज्ञानमित्यात्मज्ञानं प्रति शास्त्रज्ञानस्यानन्यथासिद्धसाधनत्वं त्वनभिमतमवगन्तव्यम् ।

(अ)—जीवतो मुक्तस्यात्माभासस्याहंकारस्य नाशे तद्व्यक्त्याश्रयभूतपरमार्थस्वरूपव्यञ्जकशुद्धाहंवृत्तेः स्फुरणं प्रतिपादयति **गवेषणात्प्राप्येति** ।

**गवेषणात्प्राप्य हृदन्तरं त-**
**त्पतेदहन्ता परिभुग्नशीर्षा ।**
**अथाहमन्यत्स्फुरति प्रकृष्टं**
**नाहंकृतिस्तत्परमेव पूर्णम् ॥ ३२ ॥**

(भा)—अहन्ताऽहंभावो **हृदन्तरं** हृदयस्यान्तर्गवेषणादन्वेषणात्तन्मूलं **प्राप्य** लब्ध्वा, **परिभुग्नशीर्षा** सती परिभुग्नं विनम्रं शीर्षं यस्याः सा उद्धृत्य प्रवर्तितुमशक्या सती **पतेत्** । स्वमूलं गत्वा स्वरूपे विलयं याति । **अथ** तादृशाहङ्कारविकारविनाशानन्तरं **प्रकृष्टमु**त्तमं विकारशून्यं शुद्धस्वरूप**मन्यद्** विनष्टाहङ्कारादितरदहंरूपं **स्फुरति,** अहमहमिति नित्योदितशुद्धवृत्तिस्फूर्तिरूपेण भाति ।

अहंपदवाच्यार्थस्यात्माभासाहङ्कारस्य विनाशे कालत्रयेऽप्यनुगताऽऽहंपदस्य लक्ष्यार्थभूता शुद्धाहंवृत्तिर्मेघापायेंऽशुमानिव स्फुरति । इयं शुद्धाहंस्फूर्तिः “ हृदयकुहरमध्ये ” इति श्लोके रमणगीतायामाख्याता ।

(अ)—जीवन्मुक्तस्य चर्या दुरवगमेत्याह **अहंकृतिमिति** ।

**अहंकृतिं यो लसति ग्रसित्वा**
**किं तस्य कार्यं परिशिष्टमस्ति ।**
**किञ्चिद्विजानाति स नात्मनोऽन्य-**
**त्तस्य स्थितिं भावयितुं क्षमः कः ॥**

(भा)—**यो** जीवन्नेव मुक्तो महानुभावः पुरुषोऽहंकृति-महङ्कारं **ग्रसित्वा** स्वात्मनि भोग्यतया गृहीत्वा **लसति** भाति । **तस्य** जीवन्मुक्तस्य **परिशिष्टं कार्यं** कर्तव्यशेषं **किमस्ति?** नास्ति किमपीत्यर्थः । हेतुमाह । **स** ग्रस्ताहङ्कार आत्मविलासी **आत्मनोऽन्यत्किञ्चिन्न विजानाति** । आत्मनः पृथङ् न किमपि विद्यते तस्य । "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत" इति वाक्यस्यायं विषयः । **तस्य स्थितिं** लोकयात्राखु **भावयितुं** मानसिककल्पनया चिन्तयितुं वा **क्षमः कः?** न कोऽपि शक्त इत्यर्थः ।

जीवत एव देहात्मबन्धान्मुक्तस्य पुरुषस्य हृदये निरन्तरं अहमहमिति ब्रह्मात्मभावस्फुरणात् तस्याहंकार आत्मस्वरूपे विलयं गच्छति, तेन सह कर्तव्यधीश्च । अभेदाखण्डस्वरूपे भेदाभासानपश्यतस्तस्य आत्मनोऽन्यत्किमपि न भाति । तस्य स्वेच्छाया अनवकाशाद्बाह्यचर्यामाभ्यन्तरस्थितिं वाऽवगन्तुं बहिर्मुखेन मनसा न शक्यते ।

जीवन्मुक्तस्य महिमा पूर्वमेवोक्तः ।

(अ) — मतिदौर्बल्याद्विचारबाहुल्यमित्याह आह स्फुट-मिति ।

**आह स्फुटं तत्त्वमसीति वेद-**
**स्तथाप्यसंप्राप्य परात्मनिष्ठाम् ।**
**भूयो विचारो मतिदुर्बलत्वं**
**तत्सर्वदा स्वात्मतया हि भाति ॥**

(भा) — **वेदः** श्रुतिस्तत्त्वमसीति तत्सत्यं स आत्मा त्वमसीति **स्फुटमाह** स्पष्टमुद्घोषयति, **तथापि** एवं स्पष्टे श्रुतेऽपि **परात्मनिष्ठां** परस्मिन्नात्मनि निष्ठां सहजां स्थितिम**संप्राप्या**लब्ध्वा **भूयः** पुनः क्रियमाणो **विचारः** सोऽहमात्मा नाहमिदं शरीरमित्यादि-तत्त्वानुसन्धानोपयोगी विचारः **मतिदुर्बलत्वं** मनोदौर्बल्यं भवति । विचारयितुर्मनसो दौर्बल्यादेवेदृशो मानसो विचारः सम्भवति । यदि दार्ढ्यान्मनो निश्चलं भवति, अन्तर्निमज्ज्य वस्तु प्राप्तुं शक्नोति, तर्हि स्वतः सिद्धं तद्वस्तु स्पष्टं भवतीत्याह । **'तत्सर्वदा स्वात्मतया हि भाति'** **तत्** तच्छब्दवाच्यं ब्रह्म **सर्वदा** कालत्रयेऽपि बन्धावस्थायामननुभूतमपि **स्वात्मतया** स्वस्यात्मभावेन **भाति** हि हृदि प्रकाशत एव । अकृतकं हि तदात्मस्वरूपं । सततचञ्चलमानसावरणादेवात्मनोऽन्तर्भान-स्यानुभवात्मकं ज्ञानं मनसि न गृह्यते ।

अत्र मतिदुर्बलत्वं अपरिपक्कता । अलं पक्कस्य सकृदुपदेशः । आवृत्तिरसकृदुपदेशादपरिपक्कस्यावश्या भवति ॥

(अ)—अथ द्रष्टुरात्मनः न कदापि दृश्यत्वं संभवतीति आत्मैकत्वं स्मारयति न वेद्मीति ॥

**न वेद्म्यहं मामुत वेद्म्यहं मा-**
**मिति प्रवादो मनुजस्य हास्यः ।**
**दृग्दृश्यभेदात्किमयं द्विधात्मा**
**स्वात्मैकतायां हि धियां न भेदाः ॥**

(आ)—अहं मां न वेद्मि न जानामि, उताथवा अहं **मां वेद्मि** जानामि, इति **मनुजस्य वादः** तत्त्वविचाराय प्रवृत्तस्य पुरुषस्य अहमात्मज्ञानी नाहमात्मज्ञानीत्येवंविधो विकल्प-वादो **हास्यः** उपहसनीयः । कुतः ? ज्ञेय आत्मा ज्ञाताऽऽत्मेति सत्येवात्मद्वैविध्ये नाहमात्मानं जानाम्युत जानामीति वादस्य प्रसक्तिः । स्वात्मा त्वेक एवेत्यनुभवः सर्वेषाम् । तस्मादेवं वाद-स्योपहसनीयत्वमित्युत्तरार्धेनाह **दृग्दृश्यभेदात्** दृक् द्रष्टाऽऽत्मा, दृश्य आत्मा इति भेदादयमात्मा **किं द्विधा** भवति ? नेत्यर्थः । **स्वात्मैकतायां** स्वात्मैक्ये धिया मनुभवजन्यबुद्धीनां भेदो नास्ति हि । लोके सर्वस्यापि पुरुषस्य स्वात्मा एक एवानुगताहंवृत्तिस्वरूपः सर्वास्ववस्थासु देशभेदे कालभेदेऽपि अव्यभिचारेण विषयी

ज्ञातैव भवति। तस्माज्जीवस्यात्माभासस्य ज्ञातुस्तन्मूलात्मनश्चाभेद उच्यते । "उद्धरेदात्मनाऽत्मानं" "आत्मानमात्मना विन्देत्" इत्यादिवाक्यानां ज्ञानस्यैव ज्ञानसाधनत्वं तात्पर्यम् ।

(अ)—यदि सहजसिद्धमात्मस्वरूपं कथं तर्हि तत्र निष्ठा न लभ्यत इत्याह हृत्प्राप्येति ।

**हृत्प्राप्य सद्धामनिजस्वरूपे**
**स्वभावसिद्धेऽनुपलभ्य निष्ठाम् ।**
**मायाविलासः सदसत्सरूप-**
**विरूपनानैकमुखप्रवादाः ॥ ३६ ॥**

(भा)—**स्वभावसिद्धे** सहजसिद्धे **निजस्वरूपे** स्वात्मस्वरूपे भासमानं **सद्धाम** सद्वस्तुनः स्थानभूतं **हृत्** हृदयं **प्राप्य निष्ठां** सहजात्मनिष्ठां **अनुपलभ्या**ऽविदित्वा, **सदसत्सरूपविरूपनानैकमुखप्रवादाः** किं सत् उतासत्, किं सरूपं उत विरूपं किं नाना उतैकमित्यादयो वादाः ये प्रवृत्तास्ते सर्वे **मायाविलासः** मायायाः सर्वेश्वरस्य चित्स्वरूपस्यापारविचित्रशक्तेः सृष्टौ सृष्टौ भेदविधानाय ब्रह्माण्डे विक्षिप्तस्य पिण्डाण्डे स्वरूपावरकस्य मायाख्यस्य भ्रामकस्य वैभवस्य विलासः ।

(अ)—आत्मलाभ एव परमा सिद्धिरित्याह **सिद्धस्येति** ।

**सिद्धस्य वित्तिः सत एव सिद्धिः**
**स्वप्नोपमानाः खलु सिद्धयोऽन्याः ।**
**स्वप्नः प्रबुद्धस्य कथं नु सत्यः**
**सति स्थितः किं पुनरेति मायाम् ॥**

(आ)—**सिद्धस्य** अकृतकस्य नित्यस्य **सतः वित्तिः** वेदनमेव **सिद्धिः** परमार्थसिद्धिः । **अन्या** अणिमाद्याः **सिद्धयः स्वप्नोपमानाः खलु** स्वप्नः उपमानं सादृश्यं यासां ताः खल्विति निर्धारणे । **प्रबुद्धस्य** स्वापाज्जातप्रबोधस्य **स्वप्नः कथं नु सत्यः?** न सत्य इत्यर्थः । **सति** सत्ये स्वात्मनि **स्थितो** निष्ठितो **मायां** सत्यस्वरूपानुभूतिप्रतिबन्धिकां **किं पुनरेति?** नैव गच्छतीत्यर्थः ।

सत्यात्मस्थितिरेव परमा सिद्धिरनश्वरत्वात् । अन्याः सिद्धयो न सन्तीति न, ताः पामरबुद्धेरद्भुता अपि मुक्तस्य नाद्भुताः प्रतिभान्ति । यातायातानामनित्यानां तासामत एव स्वप्नोपमानत्वम् । यद्यपि न पारम्यमासां सिद्धीनां, तथापि "जीवन्मुक्तस्य कालेन भवेत्पाकः क्षणे क्षणे" इत्यादिभिर्भगवन्महर्षेरुपदेशैर्मुक्तपुरुषस्य स्वभावतो भवन्ति सिद्धयः पाकानुसारत इत्यवगम्यते ।

(अ)—यावद्देहात्मभावं सोहंभावनायाः किंचित्प्रयोजनमाह **सोऽहं** इति ।

**सोऽहंविचारो वपुरात्मभावे**
**साहाय्यकारी परमार्गणस्य ।**
**स्वात्मैक्यसिद्धौ स पुनर्निरर्थो**
**यथा नरत्वप्रमितिर्नरस्य ॥ ३८ ॥**

(भा)—**वपुरात्मभावे** वपुः शरीरं स्थूलं सूक्ष्मं वा, आत्मा इति भावेऽनुभवात्मके सत्येव, **सोऽहंविचारः** सः पर आत्मा अहं जीव इति विचारो मनननिदिध्यासनरूपः सूक्ष्मो विचारः **परमार्गणस्य** परस्यात्मनो मार्गणस्यान्वेषणस्य **साहाय्यकारी** सहकारी भवति । **पुनः** किं तु **सः** सोऽहंविचारः **स्वात्मैक्यसिद्धौ** स्वात्मन ऐक्यस्य अद्वितीयभावस्य सिद्धौ प्राप्तौ **निरर्थो** निष्फलो भवति । **यथा** येन प्रकारेण **नरस्य** मनुष्यस्य **नरत्वप्रमितिर्नरत्वस्य** मनुष्यभावस्य प्रमितिर्ज्ञानं तथा स विचारो निरर्थो भवति । लोके नरस्य नरत्वे सिद्धे नरोऽहं नरोऽहमिति न कोऽपि वदति । ज्ञाते अज्ञाते वा नरत्वे नरो नर एव भवति । नायं नरः किं तु पक्षी पशुर्वेति संशये प्राप्ते नायं पक्षी पशुर्वा भवति नर एवायमिति वचनं युक्तम् । तत्रापि नर एवायमिति वचनं सिद्धस्य नरत्वस्य ज्ञापकं भवति । न तु सिद्धं नरत्वं साधयति । एवं अहं ब्रह्मास्मीति वादस्य कियत्प्रयोजनमिति प्रदर्शितम् ।

प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्म, सोऽहं, एवमादिवाक्यानां तात्पर्यं भगवतो महर्षेः सुतरां सम्मतम् । किंत्विमानि वाक्यानि परमार्थसिद्धान्तप्रतिपादकानि, नैषां वाचा कथनं मनसा मननं वा उपासनं भवितुमर्हति । येन विना न भवत्यात्मलाभरूपा सिद्धिः तदुपासनम् । अन्यद्यथाविवृतम् ।

(अ)—नित्यसिद्ध आत्मा सत्स्वरूप इति दशमदृष्टान्तेनाह द्वैतं विचार इति ।

**द्वैतं विचारे परमार्थबोधे**
**त्वद्वैतमित्येष न साधुवादः ।**
**गवेषणात्प्राग्दशमे विनष्टे**
**पश्चाच्च लब्धे दशमत्वमेकम् ॥**

(भा)—**विचारे** प्रवृत्ते तत्त्वान्वेषणकाले **द्वैतं** दृग्दृश्य-जीवेश्वरादि-द्वैतभाव एव सिद्धान्तः, **परमार्थबोधे तु अद्वैतं** सदेकमेवाद्वितीयमेव सिद्धान्त इति **एष न साधुवादः** नायं युक्तो वादः । अज्ञाते ज्ञाते वा सत्यं कालत्रयेऽपि सत्यमेव । तत्र दशमदृष्टान्तमाह **गवेषणात्प्राक्** अन्वेषणात्पूर्वं **दशमे विनष्टे**ऽदर्शनं गते **पश्चाल्लब्धे** च दर्शनं गते च **दशमत्व** तुल्य-**मेकमेव** । अदृष्टे दृष्टे च दशमः एक एव न वस्तुतो नष्टः,

दश किल नदीमुत्तीर्णाः सर्वे सुखं तीरं गता वा न वेति ज्ञानाय गणयन्तः सर्वे स्वात्मानं विहाय गणनेन दशमो नष्ट इति भ्रान्तिं किल जग्मुः । अनन्तरं पुनरात्मना सह गणनेन दशमोऽस्तीति सत्यज्ञानं किल प्रापुः । एषा दशमकथा ।

(अ)—कर्तृत्वपरित्यागादेव कर्मनाश इत्याह **करोमि** इति ।

**करोमि कर्मेति नरो विजानन्**
**बाध्यो भवेत्कर्मफलं च भोक्तुम् ।**
**विचारधूता हृदि कर्तृता चेत्**
**कर्मत्रयं नश्यति सैव मुक्तिः ॥**

(भा)—**कर्म करोमीति विजानन्नरः** पुरुषः **कर्मफलं भोक्तुं बाध्यो भवेत्** । ईश्वराज्जगतश्च पृथगहं स्वतन्त्रो वर्ते इत्यहङ्कारं पुरस्कृत्य प्रवर्तमानं कर्म कर्तारं अहङ्कारग्रस्तं पुरुषं कर्मफलभोगे नियुङ्क्ते । तस्मात् कर्म बाधकं भवति । हृदि आत्मस्वरूपभानस्थाने **कर्तृता विचारधूता चेत्** सत्यात्मस्वरूपविचारेण दूरीकृता चेत् **कर्मत्रयं** आगामिसञ्चितप्रारब्धाख्यं **नश्यति** ध्वस्तं भवति । **सैव मुक्तिः** । कर्मत्रयविनष्टिरेव मुक्तिरिति वचनेन कर्मैव बन्धः कर्मणो बाधकत्वमहङ्कारात्सिद्धम् । अहङ्कारपुरस्कृतकर्मणामेव बाधकत्वादहङ्कारनाशादात्मलाभरूपा मुक्तिः फलति ।

(अ)—सत्यस्वरूपस्यात्मनो नास्ति बन्धो नापि मोक्ष इत्याह **बद्धत्वभावे** इति ।

**बद्धत्वभावे सति मोक्षचिन्ता**
**बन्धस्तु कस्येति विचारणेन ।**
**सिद्धे स्वयं स्वात्मनि नित्यमुक्ते**
**क्व बन्धचिन्ता क्व च मोक्षचिन्ता ॥**

(भा)— **बद्धत्वभावे** बद्धस्य भावो बद्धत्वं, अहं बद्ध इति भावस्तस्मिन् **सति मोक्षचिन्ता** भवति, मोक्षचिन्ताया अवकाशः। बन्धोऽस्तीति सत्यां धियां मोक्षधियोऽवकाशो भवति । 'बन्ध-स्फूर्तिसापेक्षा मुक्तिस्फूर्तिः' । अयं व्यवहारसिद्धो लौकिकः पक्षः । अथ स्वपक्षं दर्शयति **तु** इति । **कस्य बन्ध इति** कोऽयं बद्ध इति विचारणेन सूक्ष्मेणाध्यात्मविचारेण नित्यमुक्ते कालत्रयेऽपि बन्धवर्जिते **स्वात्मनि** मूलस्वरूपेऽखण्डात्मनि **स्वयं सिद्धे** साध-ननिरपेक्षं भासमाने ब्रह्मणि लब्धे सति **बन्धचिन्ता क्व? मोक्ष-चिन्ता क्व?** बन्धमोक्षचिन्तयोरवकाश एव नास्ति । तयोः सूक्ष्मशरीरावच्छिन्न-चिदाभासपदवाच्य-जीवापरपर्याय-अहङ्कार - गतत्वात् । तस्याहङ्कारस्यापि अस्थिरत्वाद्विचाराद्यनेकोपायास्तन्ना-शार्थमेवोपदिष्टाः ।

(अ)—अथ त्रिविधमुक्तेर्विलक्षणा परमार्थमुक्तिरहंधीनाश-रूपेत्याह **रूपिणीति** ।

**रूपिण्यरूपिण्युभयात्मिका च**
**मुक्तिस्त्रिरूपेति विदो वदन्ति ।**
**इदं त्रयं या विविनक्त्यहंधी**
**स्तस्याः प्रणाशः परमार्थमुक्तिः ॥**

(भा)—**रूपिणी अरूपिणी उभयात्मिका च मुक्तिस्त्रि-रूपा** त्रिविधेति **विदो वदन्ति** । अत्र रूपिणी मुक्तिरित्यादौ मोक्षे जीवस्य रूपवत्त्वारूपवत्त्वोभयविधत्वानि विवक्षितानि । न तु रूपमस्याः अस्तीति रूपिणी, मुक्तिरेव रूपिणीति ग्राह्यम् । शब्दसाधुत्वेऽप्यर्थासाधुत्वात् रूपिणी मुक्तिरित्यसङ्गतम् । मुक्ति-पदेन मुक्त एव लक्ष्यो ग्राह्यः । मुक्तौ शरीरमस्ति नास्ति शरीरं उभयमप्युपपद्यत इति सशरीराशरीरोभयविधाख्य-त्रिप्रकारां मुक्ति माहुः । अस्तु नाम त्रैविध्यं मुक्तेः परमार्थमुक्तिस्तु एतद्वि-लक्षणेत्युत्तरार्धेनाह । **इदं त्रयं** सरूपारूपोभयविधाख्यं मुक्तित्रयं **याऽऽहंधीर्विविनक्ति** विविच्य गृह्णाति **तस्या** अहंधियः **प्रणाश** उपसंहारः **परमार्थमुक्तिः** परमप्रयोजना सत्या मुक्तिः ।

मुक्तस्याशरीरत्वमेके बादरिप्रभृतयः, सशरीरत्वमन्ये जैमि-निप्रभृतयः उभयविधत्वमन्ये बादरायणप्रभृतयश्च प्राहुः । मुक्तस्सशरीरोऽशरीरो वा स्यादुभयविधो वा स्यादेव । उक्तत्रैविध्य विलक्षणो न कोऽपि पुरुषो मुक्तो बद्धो वा भवितु मर्हति ।

"जीवन्मुक्तस्य कालेन तपसः परिपाकतः ।"
"स्पर्शाभावोऽपि सिद्धः स्याद्रूपे सत्यपि कुत्रचित् ॥"
"भूयश्च परिपाकेन रूपाभावोऽपि सिद्ध्यति ।
केवलं चिन्मयो भूत्वा स सिद्धो विहरिष्यति ॥"

र. गी. XIV. अ. श्लो९–१०

"सर्वेषु कामचारोऽस्य लोकेषु परिकीर्तितः ।"

XIV. श्लो १५

एवं मुक्तस्य त्रिविधस्थितिं उपदिशतो भगवतो महर्षेः कथमनभिमतो भवति सशरीरत्वादिवादः ?

उच्यते । उत्क्रान्तस्य अनुत्क्रान्तस्य वा पुरुषस्य स्वभावसिद्ध-तपःपरिपाकानुसारेण चिन्मयदेहवत्त्वादि सिद्ध्यत्यपि, सशरीरत्वादीनि परिपाकसाधितानि बाह्यलक्षणानि मुक्तपुरुषस्य । नैव तानि मुक्तिस्वरूपप्रतिपादकानि भवन्तीति विवक्षा । अत एव महर्षिणा, इह जीवत एव वा उत्क्रम्य शिवविष्णुब्रह्मादित्यादिलोके वा मुक्तस्य अध्यात्मस्थिति नित्यसिद्धाखण्डात्मस्वरूपानुभूति रेकैवाविशेषेण सर्वत्र लोकेष्ववस्थासु चेति "मुक्तिरेकविधैव स्यात् प्रज्ञानस्याविशेषतः" "अनुभूतौ न भेदोऽस्ति" "मुक्तलोकाश्च ते सर्वे विद्वन् भूम्यादिलोकवत् । चित्रवैभवया शक्त्या स्वरूपे परिकल्पिताः ।" इति रमणगीतायां प्रतिपादितं । अत्रापि सत्स्वरूपावस्थितिरेव परमा सिद्धिः परमा मुक्तिरिति

भूय उपदिशन् भगवान्महर्षिः अहंधीनाश एव मोक्ष इति शास्त्रस्यान्ते प्रतिपादयति ।

मुक्तस्य सशरीरत्वादिविचारो मुमुक्षोः मोक्षसाधनं न भवतीति द्योतयितुं मुक्तित्रयं विविच्य विचारयन्त्या अहंधियः प्रणाश एव परमार्थमोक्ष इति भूयोऽपि मोक्षसाधनमहङ्कारविलयं स्मारयित्वा, परमार्थमोक्षोपदेशशास्त्रमिदं समापयति ।

**सद्दर्शनं द्राविडवाङ्निबद्धं**
**महर्षिणा श्रीरमणेन शुद्धम् ।**
**प्रबन्धमुत्कृष्टममर्त्यवाण्या**
**मनूद्य वासिष्ठमुनिर्व्यतानीत् ॥ ४३ ॥**

(भा)—वासिष्ठमुनिर्गणपतिराचार्यः महर्षिणा श्रीरमणेन द्राविडवाङ्निबद्धं द्राविडवाचा मातृभाषया निबद्धं विरचितं शुद्धं पवित्रं उत्कृष्टं सद्दर्शनं एतदाख्यं प्रबन्धं ग्रन्थममर्त्यवाण्यां संस्कृतभाषायां अनूद्य अनुवादं कृत्वा व्यतानीद्विरचितवान् ।

**सत्तत्त्वसारं सरलं दधाना**
**मुमुक्षुलोकाय मुदं ददाना ।**
**अमानुषश्रीरमणीयवाणी-**
**मयूखभित्तिर्मुनिवाग्विभाति ॥४४॥**

(भा)—**सत्तत्त्वसारं सत्तत्त्वस्य** परमार्थसत्यस्य सारं सद्धि-द्योपदेशरूपं **सरलं** सुलभं यथा तथा **दधाना** धारयमाणा, जरठ-पदसन्दर्भजटिला स्तार्किकयुक्ती दूरीकृत्य अकृत्रिम-निरर्गल-नि-सर्गसिद्धधारया हृदयंगमया शैल्या सद्भावतत्त्वस्य सारांशं सा-क्षात् प्रदर्शयन्तीत्यर्थः। तादृशी मुनिवाग्विभातीत्यन्वयः। **मुनि-वाक्** मुनेरध्यात्मनिष्ठस्य वासिष्ठमुनेरस्य सद्दर्शनशास्त्रस्य संस्कृता-नुवादग्रन्थकारस्य गणपतेराचार्यस्य वाक् संस्कृतग्रन्थरूपेयं वाणी **विभाति** जयतीत्यर्थः। पुनः कीदृशी मुनिवाक्? **मुमुक्षुलोकाय मुदं ददाने**त्याह। मुमुक्षूणां देहात्मबन्धात् आत्मनो मोक्तुमिच्छूनां लोकाय सङ्घाय मुदं प्रीतिं ददाना वितरन्ती। यथेयं मुनिवाक् सिद्धात्मभावं प्रेप्सूनां प्रीतिप्रदा भवति न तथा केवलमध्यात्म-शास्त्रव्युत्पित्सूनां। एषां तु सूत्रभाष्यादयोऽद्वैतसिद्धचन्ताः सन्ति बहवो वादग्रन्थाः। सत्तत्त्वसारं सरलं दधानेति मुनिवाचं विशिष्य ग्रन्थस्यास्य विषयसंबन्धकथनानन्तरं मुमुक्षुलोकाय मुदं ददानेति अधिकारिप्रयोजनप्रतिपादनपरं विशेषणं प्रायुङ्क्ति।

अथास्य शास्त्रस्य मूलप्रवक्तुर्महर्षेः श्रीरमणस्य संस्कृतानु-वादग्रन्थकारस्य महाकवेश्च सिद्धं कमपि दिव्यं संबन्धं ग्रन्थगौरवं च गमयितुं पुनर्मुनिवाचं विशिनष्टि। **अमानुषश्रीरमणीयवाणी-मयूखभित्तिः** इति। मानुषस्येमाः मानुष्यो न मानुष्योऽमानुष्यः, श्रीरमणस्य महर्षेरिमा वाण्यो वाचस्ता एव मयूखाः रश्मयस्तेषां भित्ति राश्रयभूता मुनिवाक्। अत्रामानुष्यो वाण्यः अमानुषेति

पुंवद्भावः । अमानुषीषु श्रीरमणसम्बन्धिनीषु वाणीषु मयूखत्वारोपणात् श्रीरमणस्य महर्षेर्मयूखवद्भास्करस्थानीयत्वं, तन्निर्गतानां मूलग्रन्थवाचां रश्मिस्थानीयत्वं, अनुवादकस्य वासिष्ठमुनेः वाचो भित्तिस्थानीयत्वं च विविच्य ग्राह्यम् । यथा प्रसरन्तो रश्मयो भित्तौ सङ्क्रम्य, भित्तिं प्रकाशयन्तः स्वयं दर्शनीयाश्च भवन्ति । एवं महर्षेर्निर्गताः सच्चत्वारिंशदाख्यद्राविडग्रन्थरूपा वाग्विशेषा वासिष्ठमुनेः संस्कृतग्रन्थरूपायां वाचि सङ्क्रान्ताः सन्तस्तस्या मुनिवाचः सहजशोभां पुष्णन्तः स्वयं च दर्शनीयत्वं गता इति भावः । आश्रयभूतभित्त्यादिपदार्थनिरपेक्षमेव स्वयं प्रकाशमानानां मयूखानां न तथा दर्शनीयत्वं यथा भवति भित्त्यादिपदार्थश्रितानाम् । अनेन मूलद्राविडग्रन्थस्य संस्कृतावतारे विशेषतः प्रयोजनमुक्तं भवति ।

भरतखण्डस्यैकदेशे द्राविडवाङ्मयपरिचयवतां मुमुक्षूणामेव मूलग्रन्थ उपयुक्तो भवति । संस्कृतवाङ्मयस्याधिकदेशप्रचारित्वात् सर्वत्र भरतखण्डे मुमुक्षुलोकोपयोगी भवत्ययमनुवादग्रन्थ इति भावं दर्शयति भित्तिस्थानीयमुनिवाचि सङ्क्रान्तानां मयूखस्थानीयरमणीयवाचां दर्शनीयत्वगमक-मयूखग्राहि-भित्तिपदप्रयोगः ।

रमणीयवाङ्मयूखाः मुनिवाग्भित्तौ दर्शनीया इत्युक्त्या संस्कृतवाङ्मयमर्यादामनुल्लङ्घ्य यथासाहित्यसमयावकाशं मूलग्रन्थ एव प्रतिश्लोकं प्रतिवाक्यं मुनिवाग्रूपे संस्कृतसद्दर्शन-

ग्रन्थेऽवतीर्णो न तु केवलं स्थूलतया मूलग्रन्थस्य तात्पर्यं गृहीत्वा कृतोऽयमनुवाद इति ग्राह्यम् ।

मानुषव्यक्ते र्भगवतः श्रीरमणस्य महर्षेः वाणीनां अमानुषत्वं नायुक्तं न वौपचारिकम् । यद्यौपचारिकं अमानुषत्वं तर्हि जीवन्मुक्तेश्वरयोरभेदभावेन भगवति रमण एवामानुषत्वोपचारो वरं स्यात् । यदि नोपचरितं रमणीयवाणीष्वमानुषत्वं तर्हि मानुषान्निर्गतानां वाचां अमानुषत्वं कथं सिद्ध्यतीति माभूद्विचिकित्सा । द्विविधां वाचमुदाहरन्ति विज्ञाः । एका मनोगतान् भावान्विवृण्वाना मानुषसामान्यस्य विशेषधर्मभूता वाक् । इमामेव "वाङ्मे मनसि प्रतिष्ठिते"त्यौपनिषदाः प्राहुः । अन्या तु हृद्गता काचित् प्रेरणरूपा वाणी अनुभवदृष्टानि तत्त्वान्याख्यातुकामा मनोमयशब्दाकारपरिणामा "मनो मे वाचि प्रतिष्ठितम् ।" इत्यौपनिषदवाक्यस्य विषयभूता भवति ।

सेयं हृद्गता वाक् अतीन्द्रियानुभवदृष्टिमूलत्वा न्निगमागमाप्तवाक्य-शब्दप्रमाण-अपरपर्याय-दर्शनपदवाच्या प्रत्यक्षानुमानाभ्यां बलवत्तरं प्रमाणं भवतीत्येषा शब्दप्रामाण्ययुक्तिः "ऋचो अक्षरे परमे व्योमन्" "हृदा यत्तष्टान्मन्त्रानशंसन्" इत्येवंजातीयकैर्मन्त्रवर्णैरभिव्यक्ता भवति ।

यद्यपौरुषेयत्वाद् वेदानां प्रामाण्यमुच्यते, तर्हि हार्दवाङ्मयत्वमेवापौरुषेयत्वस्य स्वरूपमिति ग्राह्यम् । एवमिहापि ग्रन्थे

श्रीरमणीयवाणीनाममानुषत्वं हार्दवाङ्मयस्य वेदस्येवापौरुषेयत्वमिति ग्राह्यम् ।

तस्मादस्य शास्त्रस्य हार्दानुभवदृष्टत्वात्प्रामाण्योत्कर्षद्योतकं रमणीयवाणीनाममानुषत्वकथनमिति ज्ञेयम् । अथेदृशी रुत्तमप्रामाण्यवतीः रमणीयवाणीः स्ववाचि यथायथ मवतारयन्ननुवादको "मुनिवाचि महर्षेर्वाग्द्रष्टव्ये"ति स्वरसतावहेन प्रयोगेण स्वस्य तापसोत्तमेन महर्षिणा सह किमपि साजात्यं तदनुगृहीतत्वं चागमयत् ।

अत्र रूपकमलङ्कारस्तेनानुप्राणितं वस्तु ।

एवमतिगभीराशयगर्भितं व्यङ्ग्यबहुलमिदं मुनिवाचो विशेषणपदं प्रयुञ्जानस्य कवेर्वाण्यां मयूखत्वारोपणे लिङ्गव्यत्ययो न दोषाय । यदाह दण्डी—

न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।<br>
उपमा दूषणायालं यत्रोद्वेगो न धीमताम् ॥

ऋजुपदार्थप्रदर्शिनी गाढगतिका गम्यैकलक्ष्या कवेः कवितेयं पदपरिवृत्तिं न सहते ।

एवं उमासहस्रेन्द्रसहस्रादिबहुसहस्रपद्यकान्यभिनवलोकोत्तरस्तोत्रसाहित्यशैलीनिदर्शनभूतानि काव्यानि सृष्टवतः, यथार्थकाव्यकण्ठोपनामधेयस्य महाकवेः, विश्वमीमांसादिप्रणेतुः शास्त्रसागरस्य, चिराद्विनष्ट-नाममात्रावशिष्ट-मान्त्रवर्णिकदेवतादिरहस्य-प्रदर्शकसिद्धाञ्जनस्य, वेदार्थविचारवैज्ञानिक-जीव-

नस्य, जन्मसिद्धदिव्यावेशसमृद्धवाग्वीर्यविलासस्य, अतिचित्र-चारित्रस्य महानुभावस्य, भगवन्महर्षिरमणान्तेवासिलोकालङ्कारस्य, भगवतो वासिष्ठमुनेर्गणपतेराचार्यस्य युक्तेयमनन्यसाध्या संस्कृतसद्दर्शनानुवादग्रन्थरूपा वाणी विजयतेतराम् ।

इति श्रीमहर्षिरमणभगवत्पादानुध्यात-श्रीभगवद्वासिष्ठगणपतिमुने
रन्तेवासिनो भारद्वाजस्य विश्वेश्वरसूनोः कपालिनः
कृतिः सद्दर्शनभाष्यं समाप्तम् ॥

---

Printed by A. K. Sitarama Shastri, at the Vasanta Press,
Adyar, Madras.

உ

பகவான் ஸ்ரீ ரமண மஹர்ஷிகள்

அருளிய

# * உள்ளது நாற்பது.

## மங்கலம்.

வெண்பா.

1. உள்ளதல துள்ளவுணர் வுள்ளதோ வுள்ளபொரு
ளுள்ளலற வுள்ளத்தே யுள்ளதா—லுள்ளமெனு
முள்ளபொரு ளுள்ளலெவ னுள்ளத்தே யுள்ளபடி
யுள்ளதே யுள்ள லுணர்.

2. மரணபய மிக்குளவம் மக்களர ணாக
மரணபவ மில்லா மகேசன்—சரணமே
சார்வர்தஞ் சார்வொடுதாஞ் சாவுற்றா சாவெண்
சார்வரோ சாவா தவர். [ணஞ்

—

* ஸத்தர்சனத்தின் மூல கிரந்த மிது.

## நூல்.

1. நாமுலகங் காண்டலா னுவாஞ் சத்தியுள
வோர்முதலை யொப்ப லொருதலையே—நாமவுருச்
சித்திரமும் பார்ப்பானுஞ் சேர்படமு மாரொளியு
மத்தனையுந் தானு மவன்.

2. மும்முதலை யெம்மதமு முற்கொள்ளு மோர்முதலே
மும்முதலாய் நிற்குமென்று மும்முதலு—மும்முதலே
யென்னலகங் கார மிருக்குமட்டே யான்கெட்டுத்
தன்னிலையி னிற்ற றலை.

3. உலகுமெய்பொய்த் தோற்ற முலகறிவா மன்றென்
றுலகுசுக மன்றென் றுரைத்தெ—னுலகுவிட்டுத்
தன்னையோர்ந் தொன்றிரண்டு தானற்று நானற்ற
வந்நிலையெல் லார்க்குமொப் பாம்.

4. உருவந்தா னுயி னுலகுபர மற்று
முருவந்தா னன்றே லுவற்றி—னுருவத்தைக்
கண்ணுறுதல் யாவனெவன் கண்ணலாற் காட்சியுண்
கண்ணதுதா னந்தமிலாக் கண். [டோ

5. உடல்பஞ்ச கோச வுருவதனு லைந்து
முடலென்னுஞ் சொல்லி லொடுங்கு—முடலன்றி
யுண்டோ வுலக முடல்விட் டுலகத்தைக்
கண்டா ருளரோ கழறு.

6. உலகைம் புலன்க ளுருவேறன் றவ்வைம்
புலனைம் பொறிக்குப் புலனு—முலகைமன
மொன்றைம் பொறிவாயா லோர்ந்திடுத லான்மனத்
யன்றியுல குண்டோ வறை. [தை

7. உலகறிவு மொன்று யுதித்தொடுங்கு மேனு
முலகறிவு தன்னு லொளிரு—முலகறிவு
தோன்றிமறை தற்கிடனுய்த் தோன்றிமறை யாதொ
பூன்றமா மஃதே பொருள். [ளிரும்

8. எப்பெயரிட் டெவ்வுருவி லேத்தினுமார் பேருருவி
லப்பொருளைக் காண்வழிய தாயினுமம்-மெய்ப்பொருளி
னுண்மையிற்ற னுண்மையினை யோர்ந்தொடுங்கி யொ
யுண்மையிற் காண லுணர். [ன்றுதலே

9. இரட்டைகண் முப்புடிக ளென்றுமொன்று பற்றி
யிருப்பவா மவ்வொன்றே தென்று—கருத்தினுட்
கண்டாற் கழலுமவை கண்டவ ரேயுண்மை
கண்டார் கலங்காரே காண்.

10. அறியாமை விட்டறிவின் ருமறிவு விட்டவ்
வறியாமை யின்ருகு மந்த—வறிவு
மறியா மையுமார்க்கென் றம்முதலாந் தன்னை
யறியு மறிவே யறிவு.

11. அறிவுறுந் தன்னை யறியா தயலை
யறிவ தறியாமை யன்றி—யறிவோ
வறிவயற் காதாரத் தன்னை யறிய
வறிவறி யாமை யறும்.

12. அறிவறி யாமையு மற்றதறி வாமே
யறியும தூண்மையறி வாகா—தறிதற்
கறிவித்தற் கன்னியமின் ருயவிர்வ தாற்ரு
னறிவாகும் பாழன் றறி.

13. ஞானமாந் தானேமெய் நானுவா ஞானமஞ்
ஞானமாம் பொய்யாமஞ் ஞானமுமே—ஞானமாந்
தன்னையன்றி யின்றணிக டாம்பலவும் பொய்மெய்
பொன்னையன்றி யுண்டோ புகல். [யாம்

14. தன்மையுண்டேன் முன்னிலைப டர்க்கைக டாமுளவாந்
தன்மையி னுண்மையைத் தாஞய்ந்து—தன்மையறின்
முன்னிலைப டர்க்கை முடிவுற்றெொன் றுயொளிருந்
தன்மையே தன்னிலைமை தான்.

15. நிகழ்வினைப் பற்றி யிறப்பெதிர்வு நிற்ப
நிகழ்கா லவையு நிகழ்வே—நிகழ்வொன்றே
யின்றுண்மை தேரா திறப்பெதிர்வு தேரவுன
லொன்றின்றி யெண்ண வுனல்.

16. நாமன்றி நாளேது நாடேது நாடுங்கா
ணுமுடம்பே ணுட்டு ணும்படுவ—நாமுடம்போ
நாமின்றன் றென்றுமொன்று நாடிங்கங் கெங்குமொ
ணுமுண்டு நாணுடி ணும். [ன்று

17. உடனுனே தன்னை யுணரார்க் குணர்ந்தார்க்
குடலளவே நான்ற னுணரார்க்—குடலுள்ளே
தன்னுணர்ந்தார்க் கெல்லையறத் தானெளிரு நானி
யின்னவர்தம் பேதமென வெண். [துவே

18. உலகுண்மை யாகு முணர்வில்லார்க் குள்ளார்க்
குலகளவா முண்மை யுணரார்க்—குலகினுக்
காதார மாயுருவற் றுருமுணர்ந் தாருண்மை
யீதாகும் பேதமிவர்க் கெண்.

19. விதிமதி மூல விவேக மிலார்க்கே
விதிமதி வெல்லும் விவாதம்—விதிமதிகட்
கோர்முதலாந் தன்னை யுணர்ந்தா ரவைதணந்தார்
சார்வரோ பின்னுமவை சாற்று.

20. காணுந் தனைவிட்டுத் தான்கடவு ளைக்காணல்
காணு மனோமயமாங் காட்சிதனைக்—காணுமவன்
றன்கடவுள் கண்டானுந் தன்முதலைத் தான்முதல்
தான்கடவு ளன்றியில தால். [போய்த்

21. தன்னைத்தான் காண றலைவன் றனைக்காண[னைத்தான்
லென்னும்பன் னூலுண்மை யென்னையெனின்—றன்
காணலெவன் றானொன்றாற் காணவொணா தேற்றலை
காணலெவ னாதல் காண். [வற்

22. மதிக்கொளி தந்தம் மதிக்கு ளொளிரு
மதியினை யுள்ளே மடக்கிப்— பதியிற்
பதித்திடுத லன்றிப் பதியை மதியான்
மதித்திடுத லெங்ஙன் மதி.

23. நானென்றித் தேக நவிலா துறக்கத்து
நானின்றென் றுரு நவில்வதிலை—நானொன்
றெழுந்தபி னெல்லா மெழுமிந்த நானெங்
கெழுமென்று நுண்மதியா லெண்.

24. சடவுடனு னென்னாது சச்சித் துதியா
துடலளவா நானொன் றுதிக்கு—மிடையிலிது
சிச்சடக்கி ரந்திபந்தஞ் சீவனுட்ப மெய்யகந்தை
யிச்சமு சாரமன மெண்.

25. உருப்பற்றி யுண்டா முருப்பற்றி விற்கு
முருப்பற்றி யுண்டுமிக வோங்கு—முருவிட்
டுருப்பற்றுந் தேடினு லோட்டம் பிடிக்கு
முருவற்ற பேயகந்தை யோர்.

26. அகந்தையுண் டாயி னனைத்துமுண் டாகு
மகந்தையின் றேலின் றனைத்து—மகந்தையே
யாவுமா மாதலால் யாதிதென்று நாடலே
யோவுதல் யாவுமென வோர்.

27. நானுதியா துள்ளநிலை நாமதுவா யுள்ளநிலை
நானுதிக்குந் தானமதை நாடாம—ஞனுதியாத்
தன்னிழப்பைச் சார்வதெவன் சாராமற் ருனதுவாந்
தன்னிலையி னிற்பதெவன் சாற்று.

28. எழும்பு மகந்தை யெழுமிடத்தை நீரில்
விழுந்த பொருள்காண வேண்டி—முழுகுதல்போற்
கூர்ந்தமதி யாற்பேச்சு மூச்சடக்கிக் கொண்டுள்ளே
யாழ்ந்தறிய வேண்டு மறி.

29. நானென்று வாயா னவிலாதுள் ளாழ்மனத்தா
ஞனென்றெங் குந்துமென நாடுதலே—ஞானநெறி
யாமன்றி யன்றிதுநா ஞமதுவென் றுன்னறுணை
யாமதுவி சாரமா மா?

30. நானு ரெனமனமுண் ணுடியுள நண்ணவே
நானு மவன்றலை நாணமுற—நானுனத்
தோன்றுமொன்று தானுகத் தோன்றினுநா னன்று
பூன்றமது தானும் பொருள்.

[பொருள்

31. தன்னை யழித்தெழுந்த தன்மயா னந்தருக்
கென்னை யுளதொன் றியற்றுதற்குத்—தன்னையலா
தன்னிய மொன்று மறியா ரவர்நிலைமை
யின்னதென் றுன்ன லெவன்.

32. அதுநீயென் றம்மறைக ளார்த்திடவுந் தன்னை
யெதுவென்று தான்றேர்ந் திராஅ—ததுநா
னிதுவன்றென் றெண்ணலுர னின்மையினு லென்று
மதுவேதா னுயமர்வ தால்.

33. என்னை யறியேனு னென்னை யறிந்தேனு
னென்ன னகைப்புக் கிடனுகு—மென்னை
தனைவிடய மாக்கவிரு தானுண்டோ வொன்று
யனைவரனு பூதியுண்மை யால்.

34. என்று மெவர்க்கு மியல்பா யுளபொருளை
யொன்று முளத்து ளுணர்ந்துநிலை—நின்றிடா
துண்டின் றுருவருவென் றொன்றிரண் டன்றென்றே
சண்டையிடன் மாயைச் சழக்கு.

35. சித்தமா யுள்பொருளைத் தேர்ந்திருத்தல் சித்திபிற
சித்தியெலாஞ் சொப்பனமார் சித்திகளே-நித்திரைவிட்
டோர்ந்தா லவைமெய்யோ வுண்மைநிலை நின்றுபொ
தீர்ந்தார் தியங்குவரோ தேர். [ய்ம்மை

36. நாமுடலென் றெண்ணினல நாமதுவென் றெண்ணுமது
நாமதுவா நிற்பதற்கு நற்றுணையே—யாமென்று
நாமதுவென் றெண்ணுவதே னுன்மனித னென்றெ
நாமதுவா நிற்குமத னுல். [ண்ணுமோ

37. சாதகத்தி லேதுவிதஞ் சாத்தியத்தி லத்துவித
மோதுகின்ற வாதமது முண்மையல—வாதரவாய்த்
தான்றேடுங் காலுந் தனையடைந்த காலத்துந்
தான்றசம னன்றியார் தான்.

38. வினைமுதலை மாயின் விளைபயன் றுய்ப்போம்
வினைமுதலா ரென்று வினவித்—தனையறியக்
கர்த்தத் துவம்போய்க் கருமமூன் றுங்கழலு
நித்தமா முத்தி நிலை.

39. பத்தனை னென்னுமட்டே பந்தமுத்தி சிந்தனைகள்
பத்தனை ரென்றுதன்னைப் பார்க்குங்காற்—சித்தமாய்
நித்தமுத்தன் றானிற்க நிற்காதேற் பந்தசிந்தை
முத்திசிந்தை முன்னிற்கு மோ.

40. உருவ மருவ முருவருவ மூன்று
முறுமுத்தி யென்னி லுரைப்ப—னுருவ
மருவ முருவருவ மாயு மகந்தை
யுருவழிதன் முத்தி யுணர்.

உள்ளது நாற்பது

முற்றிற்று.

